वृत्तिप्रयोगे गणेशादिग्रहान्तानां पूजनं लिखितं तथैव कृत्वा वाग्दानं कर्तव्यमिति ॥ तथा बहुकुलेषु गणेशस्मरणमेवादौ कृत्वा वाग्दानं भवति । तथैवात्र प्रयोगोऽपि लिखितः । यथाहवृद्धमनुः--

वरं संपूज्य खार्जूरं फलं दत्वा मुखे तथा ।
सुरक्षितं तु कन्यार्थे कुर्य्याद् वाग्दानपूर्वकम् ॥ १ ॥

इति विवाहसोपाङ्गविधौ वाग्दानविधिः ॥

## अथ वाग्दानप्रयोगः ।

तत्र कन्यापिता भ्राता पुरोहितोऽन्यो वा कश्चिद्ब्राह्मणो वरगृहं गतस्तत्र वरस्य पूर्वोक्तगुणदोषादिलक्षणं ज्ञात्वा स्वयमुदङ्मुख उपविश्य, वरोऽपि स्वलंकृतः कृतकुङ्कुमादितिलकः प्राङ्मुख उपविशेत । द्वावपि हस्ते द्रव्यपुष्पादिकं गृहीत्वा गणपति स्मरणं कुर्यास्ताम् ।

करिष्ये' पर्य्यन्त संकल्प कर तत्पश्चात् वरवृतिप्रयोगमें जैसा कलश गणेश गौरी और ग्रहादिकोंका स्थापन पूजनादि लिखा है वैसाही करके वाग्दान करना चाहिये । तथा बहुत कुलोंमें केवल गणपतिस्मरण ही प्रथम कर वाग्दान होता है । सो इसी प्रकारका प्रयोग यहां लिखते हैं । जैसा वृद्धमनुजीने कहा है कि वाग्दाता वरकी पूजा गन्धमाल्यादिद्वारा कर उसके मुखमें खार्जूर ( छोहारा या बताशा ) देकर " वाग्दान " अर्थात् कन्याके साथ विवाह करनेके लिये सुरक्षित करदेवे । इति विधिः ॥

**अब वाग्दानका प्रयोग** लिखते हैं कि- कन्या का पिता वा भ्राता या पुरोहित अथवा कोई भी ब्राह्मण वरके गृह जाय, पूर्वमें कहे वरके गुण दोषादि लक्षणोंको कन्याके योग्य विचार आप उत्तरमुख होकर बैठे । और वर भी कुंकुमका तिलक माथामें लगाय सुन्दर वस्त्रादि धारण किये पूर्व मुख बैठे । इस प्रकार दोनों ही अपने आसनोंपर बैठे हुए हाथोंमें द्रव्याक्षत पुष्प

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बिके गौरिनारायणि नमोऽस्तु ते ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥
सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥
श्रीमन्महागणाधिपतये नमः ध्यायामि । इति ॥

ततः वाग्दाता वरं पुष्पमालादिभिरलंकृत्य तन्मुखे खार्जूर फलं ( छोहारा ) तदभावे वातासां ( बताशा ) दत्त्वा

ले गणपतिस्मरण ( ॐ सुमुखश्चैक० ) इत्यादि ध्यायामि पर्यन्त कह कर करे। फिर वाग्दाता वरको पुष्पमालादिकोंसे अलंकृत कर उसके मुखमें खार्जूर फल

स्वयं साक्षात् पूगीफलयज्ञोपवीते यथोचितं द्रव्यं चादाय वाग्दान-वचनं पठेत्—

वाचा दत्ता मया कन्या पुत्रार्थं[1] स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥ १ ॥
तुभ्यं कन्यार्थिने वाचा कन्यादानं प्रयच्छति ।
तन्निश्चयार्थं मद्दत्तं गृह्यतां साक्षतं फलम् ॥ २ ॥

अमुकीनाम्न्या कन्यया सह विवाहार्थं सुरक्षितो भव । इति पठित्वा वरहस्ते पूगीफलादिकं दद्यात् ॥

(छोहारा या बताशा ) देकर अपने हाथोंमें सुपारी नारिकेल फल यज्ञोपवीतका जोडा और यथोचित द्रव्य ले वाग्दानवचन–'वाचा दत्ता० ' इत्यादि पढकर वरके हाथमें पूगीफलादिदेवे ॥

१ पुत्रार्थमित्यत्र--पत्न्या सहाग्निहोत्रादि तस्य स्वर्गफलं स्फुटम् । ब्राह्माद्युद्वाहसम्भूतः पितॄणां तारकः सुतः विवाहस्य फलं त्वेतद्व्याख्यातं परमर्षिभिः ॥ इति स्मृतिसंग्रहोक्तादिप्रमाणेन विवाहस्य पुत्रोत्पादनमेव मुख्यप्रयोजनमुक्तम् । अतोऽत्र वरं प्रति उक्तवाक्ये पुत्रार्थम् पुत्रोत्पादनार्थं त्वया स्वीकृता, इत्येवार्थो विज्ञैः स्वीकृत इति

भाषार्थ–वाग्दाताका वरसे वाचा दत्तादि वचन कहनेका यह अर्थ है कि, मैंने तुमको वचनद्वारा कन्या दिया और तुमने पुत्र उत्पन्न करनेके अर्थ कन्याको स्वीकार किया, अब अपने विवाहार्थ दूसरीकन्याके निरीक्षणकर्मसे निश्चिन्त हो आप सुखी होवें ॥ और वाग्दातासे वरभी ऐसाही आगे लिखा प्रतिवचन कहेगा ॥ प्रतिवचनमें कहेहुए ( पुत्रार्थम् ) शब्दका ( पुत्रके साथ विवाह करनेको ) ऐसा अर्थ कोई मानकर वरके पितासे यह वचन कहना और उन्हीसे प्रतिवचन लेना बताते हैं । किन्तु ऐसा अर्थ वरकन्याके विवाहसंबन्धमें मानना शास्त्रविरुद्ध है; क्योंकि, मानवगृह्यसूत्र अष्टम खण्ड प्रथम पुरुषके सप्तमसूत्रमें कन्या ग्रहण करनेमें " पुत्रेभ्यस्त्वा प्रति गृह्णामि " यही वरका कहना लिखा है कि, पुत्रोत्पादनहीके अर्थ मैं तुमको ग्रहण करता हूं । और यहां टिप्पणीमें जो स्मृतिसंग्रहका प्रमाण लिखा है उसमें भी पुत्रोत्पादनार्थही विवाहका मुख्यप्रयोजन कहा है ॥ इत्यादि शास्त्रप्रमाणोंसे विद्वानोंका यही सिद्धान्त अर्थ है कि, वाग्दाता वरहीसे 'वाचादत्तादि ' वचन कहै और आगे लिखा प्रतिवचन वाग्दातासे वरही कहै ॥ इति ॥

ततो वरः दत्तं पूगीफलादिकं गृहीत्वा—

वाचा दत्ता त्वया कन्या पुत्रार्थं[1] स्वीकृता मया।
वरावलोकनविधौ निश्चितस्त्वं सुखी भव॥ इति पठेत्।

यदि गणेशाद्यावाहनपूर्वकं वाग्दानं कृतश्चेत्तदा-ॐ यान्तुदेवगणाः इत्यादि वाक्यैस्तानपि विसृज्य, ततः ब्राह्मणादिभ्यो यथाशक्ति दक्षिणादिकं दत्त्वा ब्राह्मणान् गुरुन् वृद्धांश्च प्रणमेत्॥

इति विवाहसोपाङ्गविधौ वाग्दानप्रयोगः॥

## अथ वरवृतिकर्मप्रयोगः।

( तिलक—टीका—फलदान—नामभिर्लोके प्रसिद्धः )

तत्र नारदस्मृतौ ( अध्या० १२। २। ३ ) यथा—

स्त्री पुंसयोस्तु संबन्धाद्वरणं प्राग् विधीयते।
वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः॥ इति।

तब वर भी दिये हुए फल द्रव्यादि हाथमें लेकर वाग्दातासे 'वाचा दत्ता' इत्यादि प्रतिवचन कहदेवे। इसके पीछे पुरोहितादि ब्राह्मणोंको यथाशक्ति दक्षिणादि देवे। यदि गणेश कलशादि स्थापन होकर वाग्दान हुआ हो तो उनका विसर्जन 'ॐ यान्तु' इत्यादि वाक्योंसे करके तब ब्राह्मण, गुरु और वृद्धोंको प्रणाम कर इस कर्मको पूर्ण करदेवे। यह वाग्दान प्रयोग पूरा हुआ॥

अब वरवृतिप्रयोग लिखते हैं--जो तिलक, टीका, फलदान आदि नामोंसे लोकमें प्रसिद्ध है॥ इसका विधान शास्त्रकारोंने इस प्रकार लिखा है, जैसे नारदस्मृति अ० १२।२।३ में है कि, कन्या और वरके यथोचित लक्षणादि स्थिर होजानेपर स्त्री और पुरुष इन दोनोंके विवाह संस्कार संबन्ध होनेमें पहिले वरण करना तत्पश्चाद् पाणिग्रहणका विधान करना विद्वानोंने निश्चित किया है। इस प्रमाणसे वरण प्रथमही करे॥ तथा मुहूर्तचिन्तामणिके विवाह

१ पुत्रोत्पादनार्थम्।

मुहूर्तचिन्तामणौ विवाहप्रकरणे—

धरणिदेवोऽथवा कन्यकासोदरः शुभदिने गीतवाद्यादिभिः संयुतः । वरवृतिं वस्त्रयज्ञोपवीतादिना ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ॥ इति ॥

तत्र क्रमः—शुभदिने कन्याप्रदः स्वगृहे श्रीखण्डचन्दननारिकेलफलहरिद्रपूगीफलदूर्वायज्ञोपवीतानि तथा यथोचितोष्णीषादिवस्त्राभरणानि यथाशक्ति द्रव्याणि च कुंकुमारक्ततण्डुलपूरितबृहत्पात्रे (स्थाली लोके) वरवरणसामग्रीं निधापयेत् । ततः कन्याभ्राता पुरोहितोऽन्यो वा कश्चिद्ब्राह्मणः गणपतिस्मरणपूर्वकं पूर्वोक्तवरणसामग्रीं गृहीत्वा वरगृहं व्रजेत् । ततः ‘सुमुखश्च’ इत्यादि ‘जनार्दनाः’ इत्यन्तं पठित्वा गणपतिस्मरणं कुर्यात् । श्रीमन्महागणाधिपतये नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । इति ॥ ततो वरगृहं गतस्तत्र शुभमुहूर्तलग्नवेलायामङ्गणादिशुभस्थाने उदङ्मुख उपविश्य ततः स्वलङ्-

प्रकरणमें वरवृति करना इस प्रकार बताते हैं कि, तीनों उत्तरा, रोहिणी, कृत्तिका और तीनों पूर्वा, इनमेंसे किसी नक्षत्रवाले दिन शुभ मुहूर्तमें, पुरोहितादि कोई ब्राह्मण या कन्याका सगा भाई, मङ्गल गान वाद्योंके सहित, वस्त्र यज्ञोपवीत द्रव्यआदि द्वारा कन्यादान ग्रहण करनेके अर्थ वरका वरण करे इति ॥ वरण करनेका क्रम यह है कि, कन्यादाता शुभदिन विचार अपने गृहमें, मलयागिरि चन्दनका मुट्ठा, नारियल फल, हरिद्रा, सुपारी, दूर्वा, यज्ञोपवीतके जोडे तथा यथोचित पगडी आदि वस्त्र, आभूषणादि और यथाशक्ति द्रव्योंको कुंकुमके रंगे चावलोंसे भरे बडे थालमें वर वरणकी सभी सामग्री धर देवे । फिर पुरोहितादि कोई ब्राह्मण या कन्याका सगाभाई वरणकी सामग्रियोंको लेकर वरण कर्ता "ॐ सुमुखश्चैक०" इन श्लोकों[1] द्वारा गणेशस्मरण पूर्वक वरके गृह जानेके लिये यात्रा करे ॥ वरके गृह पहोंच, वहां शुभमुहूर्त और सुन्दर लग्नके समय अङ्गणादि पूजास्थानमें ‘ॐ स्वस्तिन

१ इनका ध्यान ३६ पृष्टमें देखलेना ।

कृतं कृतकुङ्कुमकेशरादिशुभतिलकं वरमपि स्वस्तिवाचनपूर्वकं तत्रैवानीय शुभासने प्राङ्मुखमुपवेशयेत् । स्वस्तिवाचनं यथा—

ॐ स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ( य० अ० २५ मं० १९ ) ॥ १ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वेनो देवाऽअवसागमन्निह ( य० २५ मं० २० ) ॥ २ ॥ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहि देवहितं यदायुः ( य० अ० २५ मं० २१ ) ॥ ३ ॥ शतमिन्नु शरदोऽअन्ति देवा यत्रानश्चक्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मद्ध्यारीरिषतायुर्गन्तोः ( य० अ० २५ मं० २२ ) ॥ ४ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः । विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ( य० अ० २५ मं० २३ ) ॥ ५ ॥ दीर्घायुत्त्वाय बलाय वर्च्चसे । सुप्रजाय त्वाय सहसाऽअथो जीव शरदः शतम् ॥ ६ ॥ द्यौः शान्तिरन्तरिक्षᳬं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्वᳬं शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ( य० अ० २५ मं० १७ ) ॥ ७ ॥ सुशान्तिर्भवतु ॥ इति ॥

'ॐस्वस्तिन इन्द्रो' इत्यादि मन्त्रोंको ब्राह्मणोंको पढते रहनेपर वरणकर्ता आयकर उत्तरमुख आसनपर बैठे और कुंकुम केशरादि मंगल तिलक लगाये वस्त्राभरणसे

ततो वरो वरणकर्ता च द्वावपि सहैव गणपत्यादिपूजनं कुर्याताम् । तद्यथा-आचम्य प्राणानायम्य कुशानीतजलैः—

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

ॐ पुण्डरीकाक्षः पुनातु इत्यात्मानं पूजाद्रव्याणि चाभिषिंच्य द्रव्याक्षतान् गृहीत्वा वरो वरणकर्ता च पूर्वोक्तरीत्या 'सुमुखश्च' इत्यादिना 'जनार्दनाः' इत्यन्तं पठित्वा गणपतिस्मरणं कुर्याताम् ॥ श्रीमन्महागणाधिपतये नमः । कुलदेवेभ्यो नमः । इष्टदेवेभ्यो नमः । ग्रामदेवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ॥ ततः कुशादीन्यादाय-वरः-ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भागवतो महापुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्याद्य ब्रह्मणोद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे भरतखण्डे जम्बूद्वीपे आर्यावर्तैकदेशे बौद्धावतारे अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोत्पन्नः अमुकशर्म्मा अमुकगोत्रोत्पन्नया अमुकनाम्न्या

समलङ्कृत वरको भी लायकर पूर्वाऽभिमुख आसनपर बैठावे । इस प्रकार बैठ जानेपर वर और वरणकर्ता दोनोंही गणपत्यादिका पूजन प्रारंभ करें ॥ तीन आचमनके बाद प्राणायाम कर कुशासे जल 'ॐ अपवित्रः' इस मन्त्रसे अपने और पूजाकी सब सामग्रियों पर छिडक देवे । फिर हाथमें द्रव्याक्षत ले 'ॐ सुमुखश्चैक' इत्यादिसे गणपतिस्मरण कर द्रव्यादि पृथ्वीपर छोड, फिर दोनोंही कुश जल हाथोंमें ले संकल्प करे । वर 'ॐ विष्णुः' इत्यादि कह अमुक स्थानोंमें वर्तमान संवत्सरादिका नाम कहता हुआ

कन्यया सह स्वकीयविवाहाङ्गभूतपाणिग्रहणार्थवरणग्रहणकर्मणि शुभतासिद्ध्यर्थं गणपतिकलशग्रहाणां स्थापनं पूजनञ्चाहं करिष्ये ॥ वरणकर्त्तापि कुशादीन्यादाय मासाद्युच्चार्य अमुकगोत्रः अमुकशर्मा अमुकगोत्रायाः अमुकनाम्न्याः कन्यायाः विवाहाङ्गभूतवरवरणकर्मणि शुभतासिद्ध्यर्थं गणपत्यादिदेवानां यथोपस्थितोपचारैः पूजनमहङ्करिष्ये॥ ततः कलश--गणेश--गौरी--ग्रहाणां स्थापनादिकं कुर्यात् । तद्यथा--यजमानो गन्धादिपञ्चोपचारैः भूमिं "ॐ भूम्यै नमः ॥ इति संपूज्य । भूमिस्पर्शनम्--ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः ॥ ( य० अ० १३ मंत्र १८ ) गोमयनिर्मितां गौरीमुपस्पृश्य ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमि त्त्वा हवामहे ॥ (य. १६ मं. १६) कलशतले सप्तधान्यं यवान्वा ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनुप्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ( य. अ. १ मं. २० ) इति मंत्रेण प्रक्षिप्य धान्योपरि कलशं पूर्वोक्तधातुजं मृण्मयं वा-ॐ आ-

'पूजनञ्चाहं करिष्ये' पर्यन्त कहकर जल छोडदेवे ॥ वरणकर्ता भी ऐसाही कुशादि ले 'विष्णुः' इत्यादि कह 'पूजनङ्करिष्ये' पर्यन्त दूसरा संकल्प कर जल छोड देवे। तदन्तर कलश, गणेश, गौरी और ग्रहोंका स्थापन पूजनादि निम्नलिखित रीतिसे वर और वरकर्ता दोनोंही करते जावें। 'ॐभूम्यै नमः' इस मंत्रसे भूमिकी पूजा यथोपचार गंध, पुष्प, धूप, दीप और नैवेद्य यह पंचोपचारसे कर भूमिस्पर्शन

जिग्घ्रकलशम्मह्या त्वा विशन्त्विन्दवः । पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥ ( य० अ० ८ मं० ४२ ) इति निक्षिप्य कलशे शुद्धजलम् ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्न्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥ ( य० अ० ४ मं० ३६ । इति मंत्रेण पूरयित्वा कलशकण्ठे रक्तवस्त्रं सूत्रं वा ॐ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तं धीरासः कवयऽउन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः ॥ इति मंत्रेण वेष्टयेत् । ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ कलशे गन्धमूचन्दनादिना परिलेपनञ्च कृत्वा ॐ याऽओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगम्पुरा । मनै नु बभ्रूणामहं शतन्धामानि सप्त च ॥ ( य० अ० १२ मं ७५ ) कलशे सर्वौषधीः । ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः ॥ ( य० अ० ३६ मंत्र १३ ) इति सप्तमृदः । ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः

'ओंभूरसि' मन्त्रसे गौरीका स्पर्श 'ॐ मानस्तोके' मंत्रसे कलशके नीचे सप्तधान्य या यव 'ॐ धान्यमसि' मन्त्रसे धान्यपर कलश पहिले कहे प्रकार धातु या मट्टीका 'ॐ आजिघ्रकलश, मन्त्रसे कलशमें शुद्धजल, 'ॐ वरुणस्योत्तं०' मन्त्रसे कलशके कण्ठमें रक्त वस्त्र या सूत्र वेष्टित करे 'ओं युवासुवासा' मंत्रसे वा 'ओं परिवाज पतिः' मन्त्रसे कलशमें गंध 'ओं गन्धद्वारां' मन्त्रसे छोडे और कलशके ऊपर भी लगा देवे । कलशमें

१ सप्त धान्यानि-व्रीहि--चावल १, यव--जवा २, गोधूम--गेहूं ३, नीवार--कङ्कुनी ४, श्यामाक--सांवा ५, मुद्ग--मुंग ६, और माष--उडद ७ ॥

परुषस्परि। एवानो दूर्वे प्रतनु सहस्रेण शतेन च॥ (य० अ० १३ मंत्र २०) इति दूर्वाङ्कुराणि। ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वहंसः॥ (य० अ० १२ मंत्र ८९) इति पूगीफलम्। ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥ (य० अ० ११ मंत्र २५) इति कलशे पञ्चरत्नानि। ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्। स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥ (य० अ० १३ मंत्र ४) इति हिरण्यम्। ॐ अम्बेऽअम्बिकेऽम्बालिके न मानयति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ इति पञ्चपल्लवान् आम्रपल्लवं वा। ॐ पवित्रेस्त्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य

'सर्वौषधी औ 'औषधी' मंत्रसे छोडै॥ सप्तमृत्तिका—'ॐ स्योना पृथिविनो०' मन्त्रसे, दूर्वा 'ॐ काण्डात्काण्डात् प्र०' मन्त्रसे, पूगीफल 'ॐ या फलिनी' मन्त्रसे पञ्चरत्न. 'ॐ परिवाजपति०' मन्त्रसे हिरण्य, ॐ हिरण्य गर्भ०' मन्त्रसे पंचपल्लव या आम्रपल्लव, ॐ अम्बे अम्बिके०' मन्त्रसे कुशा

१ सर्वौषध्यः—मुरा--मुर्रा १, वचा--२, कुष्ठं--कूट ३, शैलेयं--प्रसिद्ध है ४, हरिद्रा ५, दारुहरदी ६, सुंठी--७, चम्पक ८, मांसी--जटामासी ९, और मुस्ता--नागरमोथा १० ॥ सर्वाभावे सतावरी--सब न मिलै तो सतावर ही छोडै॥

२ सप्तमृदः—अश्वस्थान--घोडाके नीचेकी १, गजस्थान-हाथीके थानकी २, वल्मीक-वेम उरकी ३, संगम--नदीके संगमकी ४, ह्रदकी ५, चतुष्पथकी ६, रथकी ७ इति॥

३ पञ्चरत्नानि—कनकं-सुवर्ण या सोना १, कुलिशं--हीरा २, नीलं--३, पद्मरागं—पोखराज ४, और मौक्तिकं--मोती ५॥ इति॥

४ पञ्चपल्लवान्—उदुम्बर--गूलर १, न्यग्रोध--वट २, अश्वत्थ-पीपल ३, जांबू--जामुन या पाकर ४, आम्र--आम ५॥ इति॥

यत्कामः पुने तच्छकेयम् ॥ (य० अ० १ मं० १२ ) इति कलशे कुशान् । ॐ पूर्णा दर्व्वि परापत सुपूर्ण्णा पुनरापत । वस्नेव विक्रीणावहा ऽ इषमूर्ज्जᳪ शतक्रतो ॥ ( य० अ० ३ मं० ४९ ) इति कलशोपरि तण्डुलपूर्णपात्रम् । ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्योव्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥ ( य० अ० ३ मं० ९ ) इति कलशपूर्णपात्रोपरि घृतदीपम् । इति मङ्गलकलशं संस्थाप्य तत्समीपे पूर्णपुटकादावक्षतपुञ्जोपरि पूगीफलं निधाय तत्र गणेशमावाहयेत् । अक्षतान् गृहीत्वा--

हे हेरंब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज ।
सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ पितुः पितः ॥
नागास्य नागहार त्वं गणराज चतुर्भुज ।
भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ॥
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।
इहागत्य गृहाण त्वं पूजां रक्ष च मे क्रतुम् ॥

ॐ गणानान्त्वेति गृत्समदऋषिर्लिङ्गोक्ता देवता त्रिष्टुप्छन्दो गणपत्यावाहने विनियोगः । ॐ गणानान्त्वा गणपतिᳪ हवामहे प्रियाणान्त्वा प्रियपतिᳪहवामहे निधीनान्त्वा निधिपतिᳪ

ॐ पवित्रेस्थो० ' मन्त्रसे छोडे । कलशके ऊपर तंडुलपूर्णपात्र "ॐ पूर्णादर्वि " मन्त्रसे धरे । पूर्णपात्र पर घृत दीप "अग्निर्ज्योति० " मंत्रसे धरै ॥ इस प्रकार कलशस्थापन कर समीप ही पर्णपुटकादिमें रक्ताक्षत पुंजपर पूगीफल रख उसीपर महागणपतिका आवाहन, हाथमें अक्षत ले 'हे हेरम्ब० ' इत्यादि 'आवाहयामि ' तक मन्त्रोंको पढकर करे ।

हवामहे व्वसो मम । आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम् ॥ ( य० अ० २३ मं० १९ ) ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः महागणपतिं आवाहयामि ॥ पुनरक्षतान् गृहीत्वा गोमयनिर्मितायां गौर्यां--ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण ॥ ( य० अ० ३१ मं० २२) ॐ भूर्भुवः स्वः गोमयपिण्डे गौरीं सांगां सपरिवाराम् आवाहयामि । पुनरक्षतान् गृहीत्वा कलशे वरुणं ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणेह बोध्युरुश`ᳫ`स मान ऽआयुः प्रमोषीः ॥ ॐ भूर्भुवः स्वः कलशे वरुणं साङ्गं सपरिवारं आवाहयामि ॥ पुनरक्षतान् गृहीत्वा—
ॐ मनोजूर्ज्जुतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ`ᳫ`समिमन्दधातु व्विश्वे देवास ऽ इह मादयन्तामो ३ म्प्रतिष्ठ ॥ ( य० अ० २ मंत्र १३ ) ॥ गणपत्याद्यावाहितान् देवान् प्रतिष्ठापयामि । आसनार्थे चाक्षतान् समर्पयामि ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः । ॐ भूर्भुवः स्वः गौर्यै नमः । इति मंत्राभ्यां यथोपस्थितोपचारैः गणेशं गौरीञ्च संपूज्य ॐ भूर्भुवः स्वः वरुणाय नमः । इति वरुणं गन्धादिभिरेव संपूजयेताम् । ॐ अद्यार्चनायां

फिर अक्षत ले गोमय निर्मित गौरपर गौरीका "ॐ श्रीश्चते०" मन्त्रसे आवाहन करे ॥ पुनः अक्षत ले कलशमें वरुणका "ॐ तत्त्वायामि०" मन्त्रसे आवाहन और "ॐ मनोजूति०" इस मन्त्रसे प्रतिष्ठा कर आसनार्थ अक्षत समर्पण करदेवे । इसके पश्चात् "ॐ भूर्भुवः स्वः सिद्धिबुद्धि०" और "ॐ भूः० गौर्यै०" आदि तथा "ॐ भू० वरुणाय० ॥

गन्धाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणादिसहितया अनया पूजया गणपत्यादिदेवताः प्रीयन्तान्नमम । ततः कलशे गङ्गाद्यावाहनं कुर्यात्-

ॐ सर्व्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः ।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥

ततः कलशाभिमन्त्रणम् । अनामिकाग्रेण स्पृष्ट्वाः--

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
अङ्गैश्च सहिताः सर्व्वे कलशन्तु समाश्रिताः ।

ततः कलशप्रार्थना—

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवा; सपैतृकाः ॥

आदि इन नाममन्त्रोंसे अथवा वैदिक या पौराणिक मन्त्रोंसे षोडशोपचार वरुणका गन्धसे आरम्भकर पूजन करे । अर्थात् पाद्यम्, अर्घ्यम्, आचमनीयम्, स्नानीयम्, वस्त्रम्, चन्दनम्, अक्षतान्, पुष्पम्, धूपम्, दीपम्, नैवेद्यम् आचमनीयजलम्, तांबूलम्, पूगीफलम्, दक्षिणाम् इन सभोंसे पूजा कर हाथमें जल ले "ॐ अद्यार्चनायां०" इत्यादि "प्रीयन्तान्नमम" पर्यन्त कह जल छोड देवे ॥ फिर कलशमें गंगादिका आवाहन 'ॐ सर्वे स० इस श्लोकसे कर, अपनी अनामिका अंगुलीके अग्रभागसे कलशको स्पर्श कर अभिमन्त्रण 'ॐ कलशस्य इत्यादि 'समाश्रिताः' पर्यन्त कहके करना ।

त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः।
त्वत्प्रसादादिदं कर्म कर्त्तुमीहे जलोद्भव।
सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा।

ततः गणपतये विशेषार्घ्यं दद्यात्, तद्यथा—पात्रे रक्ताक्षतगन्धपुष्पद्रव्यफलजलानि गृहीत्वाः—

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक।
भक्तानामभयं कर्ता त्राता भव भवार्णवात्॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो।
वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद॥
गृहाणार्घ्यं मया दत्तं सर्व्वदेवनमस्कृत।
अनेन सफलार्घ्येण फलदोऽस्तु सदा मम॥

ॐ सिद्धिबुद्धिसहितमहागणपतये नमः। विशेषार्घ्यं समर्पयामि॥
ततः प्रार्थना—

ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते॥

नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः।
नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥
विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे।
भक्तप्रियाय देवाय नमस्तुभ्यं विनायक॥

फिर हाथ जोड़ प्रार्थना 'देवदानव०' इत्यादि 'प्रसन्नो भव सर्वदा' पर्यंत कहके करना। तत्पश्चात् ताम्रादिपात्रमें रक्ताक्षत, गंध, पुष्प, द्रव्य, फल और जल लेकर 'ॐ रक्षरक्ष०' इत्यादि 'विशेषार्घ्यं समर्पयामि' पर्यन्त कह गणेशको विशेषार्घ्य देवे। फिर हाथ जोड प्रार्थना 'ॐ विघ्नेश्वराय' इत्यादि

लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥

इति कलशगणेशगौरीपूजनं कृत्वा ततः पीठे पर्णपुटे वा सूर्यादि-देवानावाह्य पूजयेत्। यथा अक्षतान् गृहीत्वा ॐ भूर्भुवः स्वः सूर्याय नमः, सूर्यमावाहयामि। ॐ भूर्भुवः स्वः चन्द्रमसे नमः, चन्द्रमसमा-वाहयामि। ॐ भूर्भुवः स्वः भौमाय नमः, भौममावाहयामि। ॐ भूर्भुवः स्वः बुधाय नमः, बुधमावाहयामि। ॐ भूर्भुवः स्वः गुरवे नमः, गुरुमावाहयामि। ॐ भूर्भुवः स्वः शुक्राय नमः, शुक्रमावाहयामि। ॐ भूर्भुवः स्वः शनये नमः, शनिमावाहयामि, ॐ भूर्भुवः स्वः राहवे नमः, राहुमावाहयामि। ॐ भूर्भुवः स्वः केतवे नमः, केतुमावाहयामि। ॐ भूर्भुवः स्वः अधिदेवेभ्यो नमः, अधिदेवानावाहयामि। ॐ भूर्भुवः स्वः प्रत्यधिदेवेभ्यो नमः, प्रत्यधिदेवानावाहयामि। ॐ भूर्भुवः स्वः कुलदेवेभ्यो नमः, कुलदेवानावाहयामि। ॐ भूर्भुवः स्वः ग्रामदेवेभ्यो नमः, ग्रामदेवानावाहयामि। ॐ भूर्भुवः स्वः इन्द्रादिदशदिक्पालेभ्यो नमः, इन्द्रादिदशदिक्पालानावाहयामि, ॐ भूर्भुवः स्वः गणपत्यादि-पञ्चलोकपालेभ्यो नमः, गणपत्यादिपञ्च लोकपालानावाहयामि। ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञ्ञः समिमन्दधातु। विश्श्वेदेवासऽइहमादयन्तामोऽम्प्रतिष्ठ (य० अ० २ मंत्र १३)॥ ॐ सूर्याद्यावाहितान्देवान् प्रतिष्ठापयामि॥ इत्यक्षतान्प्र-

'सर्वकार्येषु सर्वदा' पर्यन्त कह करना। इस प्रकार कलश, गणेश, गौरीका पूजन पूर्ण कर फिर सूर्यादिग्रहोंका, किसी नव कोष्ठात्मक पीठ या पर्णपुटमें 'ॐ भूर्भुवः स्वः सूर्याय०' आदिनाममन्त्रों अथवा वैदिक या पौराणिकमन्त्रों द्वारा सभीका आवाहन, प्रतिष्ठा कर सर्वोपचारसे "ॐ सूर्याद्यावा०" इत्यादि नाममंत्रसे पूजनकर हाथमें जल ले। 'अद्यार्चनायां०' इत्यादि

क्षिप्य, सर्वोपचारैः ॐ सूर्याद्यावाहितेभ्यो देवेभ्यो नमः । इति मन्त्रेण सर्वान् संपूज्य हस्ते जलमादाय–ॐ अद्यार्चनायां स्नानादिदक्षिणासहितया अनया पूजया सूर्याद्यावाहिता देवताः प्रीयन्तान्न मम ॥ इति जलं प्रक्षिपेत् । ततः प्रार्थना——

ॐ ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रश्शनिराहुकेतवः सर्व्वे ग्रहाः शान्तिकरा भवन्तु ॥

सर्व्वेभ्य आवाहितदेवेभ्यो नमः ॥ इति कलश-गणेश-गौरी-ग्रहाणाम्पूजनं कृत्वा वरः वरणकर्ता च पुरोहितादियथासंख्य-ब्राह्मणानां पूजनं कृत्वा मङ्गलवाचनार्थं दक्षिणां दद्यात् । तद्यथा-ॐ ब्राह्मणाय नमः । इति मंत्रेण पादप्रक्षालनादिभिरेकैकं संपूज्य हस्ते कुशजलदक्षिणाश्चादाय ॐ अद्य अमुकगोत्रः अमुकशर्म्मा अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय मङ्गलवाचनार्थम् इमां दक्षिणाम् तुभ्यम् अहं संप्रददे । इति दद्यात् । ब्राह्मणः दक्षिणां गृहीत्वा, ॐ मङ्गलं तवास्तु । इति ब्रूयात् ॥ ततो वरणकर्ता–ॐ वराय नमः, वरचरणाभ्यान्नमः । इति वाक्येन वरपादौ प्रक्षाल्य तस्य ललाटे मन्त्राभ्याम तिलकं कुर्यात् । मन्त्रौ यथा–ॐ युञ्जन्ति ब्रध्नमरुषञ्चरन्तम्परितस्थुषः । रोचन्ते रोचना दिवि १ ।

वाक्य कह जल छोड, फिर प्रार्थना–' ब्रह्मामुरारि० ' इस श्लोकसे कर देवे ॥ यह कलश , गणेश, गौरी और ग्रहादिकोंका पूजन पूराकरके तदनन्तर वर और वरणकर्ता अपने पुरोहितादि जितने ब्राह्मणोंको होसके मङ्गलवाचनार्थ पूजन कर दक्षिणा दे देवे । इस प्रकार कि- ' ओं ब्राह्मणाय नमः ' इस मन्त्रसे एक एक ब्राह्मणका पादप्रक्षालनादि पूजन कर, हाथमें कुश, जल, दक्षिणा ले ' ओं अद्य० ' इत्यादि गोत्र नामोंको कह ' मङ्गलवाचनार्थम् ' आदि 'संप्रददे' पर्यन्त कह ब्राह्मणको दक्षिणा दे देवे । ब्राह्मण दक्षिणा लेकर 'ओं मङ्गलन्तवास्तु' ऐसा कहदेवे । फिर वरणकर्ता ' ओं वराय नमः ' इत्यादि वाक्यसे वरके चरणोंको धोय, फिर अपने हाथोंको धोकर, कुंकुमादिसे वरके माथेमें ' ओं युञ्जन्ति० ' इन

युञ्जन्त्यस्य काम्म्याहरी विपक्षसारथे । शोणाधृष्ष्णूनृवाहसा ( य० अ८ २३ मं० ५, ६ ) ॥ २ ॥ इति । ततः पुष्पमालाञ्च परिधाप्य हस्ते कुशजलसहितां वरणसामग्रीं गृहीत्वा । ॐ विष्णुर्विष्णुः अद्य पूर्व्वोच्चरितग्रहगुणविशिष्टायां तिथौ शुभे मुहूर्ते अमुकगोत्रः अमुकशर्म्मा अमुकगोत्रोत्पन्नायाः अमुकीनाम्न्याः कन्यायाः विवाहाङ्गभूतपाणिग्रहणकर्तृत्वेन अमुकगोत्रोत्पन्नममुकनामकं वरं सुपूजितमेभिः कुङ्कुमाक्ततण्डुलपूरितपात्रश्रीखण्डचन्दननारिकेलपूगीफलहरिद्रादूर्वावस्त्रादिभिर्यथाशक्तिद्रव्यैश्च त्वामहं वृणे ॥ इति वरं वृत्वा श्लोकं पठेत्—

ॐ शुभे कालेऽग्निसान्निध्ये कन्यां स्नाते ह्यरोगिणि ।
अव्यङ्गेऽपतितेऽक्लीबे पिता तुभ्यं प्रदास्यति ॥

पुरोहितादिश्चेत् तदा " दाता तुभ्यं प्रदास्यति" इत्यूहः कार्य्यः ॥ ततो वरणसामग्रीं वरो गृहीत्वा—ॐ वृतोऽस्मि—इति पठेत् ॥ अस्मिन्नेवावसरे केचित् लग्नपत्रिकामपि ददति पुरोहितः श्रावयति च । इति ॥ ततः पुरोहिताय समुचितां वरदक्षिणाम् दद्यात् । हस्ते कुशादीन्यादाय ॐ अद्य अमुकगोत्रः अमुकशर्म्मा अस्य

दो मन्त्रों द्वारा तिलक अक्षत लगाय, फूलोंकी माला बरको पहिनाय देवे । और अपने हाथमें कुश जल सहित वरणकी सामग्री ले–' ॐ विष्णु० ' इत्यादि अमुक स्थानोंमें गोत्र नामादि कहता हुआ ' अहं वृणे ' पर्यन्त पूरा संकल्प कर वरको देवे । और ' ॐ शुभे काले० ' इस श्लोकको कह देवे । यदि भाई वरणकर्ता नहीं हो दूसरा कोई हो तो श्लोकमें जो पिता शब्द है उसके स्थानमें दाता शब्द कहकर पढै । और वर इस वरणकी सामग्रियोंको ग्रहण कर, ' वृतोऽस्मि ' ऐसा कहदेवे । इसी अवसरमें कन्याके यहाँसे आई हुई लग्नपत्रिका वरके पुरोहित पढके सबको अर्थ बताते हैं ॥ तत्पश्चात् वर और वरणकर्ता अपने पुरोहितादि ब्राह्मणोंको इस प्रकार दक्षिणादेवे कि, हाथमें कुश जलादि ले ' ॐ अद्य० ' इत्यादि गोत्रनामोंको कहता हुआ

कर्मणः परिपूर्णतासिद्ध्यर्थं अमुकगोत्राय अमुकशर्म्मणे पुरोहितब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे ॥ इति दक्षिणां दत्त्वा पुनरपि कुशादीन्यादाय—ॐ अद्यास्मिन्कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं भूयसीं दक्षिणान्नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाभागं विभज्य दातुमहमुत्सृजे ॥ इति संकल्प्य दक्षिणावितरणंकुर्यात्। ततः पुरोहितः यजमानललाटे तिलकं कुर्य्यात्, तत्र मन्त्रः——

ॐ मङ्गलं भगवान्विष्णुर्मङ्गलं गरुड़ध्वजः।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनो हरिः ॥ इति ॥

ततो यजमानौ हस्तेऽक्षतान् गृहीत्वा——

ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम्।
इष्टकामार्थसिद्ध्यर्थं पुनरागमनाय च ॥

गणपत्याद्या अत्रावाहिताः देवाः स्वस्थानं गच्छन्तु ॥ इति देवान् विसृज्य प्रणमेत्।

ॐ यस्य स्मृत्या च नामोक्त्या व्रतपूजाक्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

इति विष्णुं स्मृत्वा, हस्ते जलमादाय, अनेन कर्मणा भगवान् प्रजापतिः प्रीयतान्न मम ॥ इति जलमुत्सृज्य, द्रव्यादिभिः—

'संप्रददे' पर्यन्त कह पुरोहितको दक्षिणा दे और भी ब्राह्मणों दीन, अनाथोंको देनेके लिये भूयसी दक्षिणासहित कुशजलादि हाथमें ले 'ॐ अद्यास्मिन्०' इत्यादि 'समुत्सृजे' पर्यन्त संकल्पकर ब्राह्मणादिकोंको बांट देवे ॥ फिर पुरोहित यजमानके माथे में तिलक लगावे 'ॐ मङ्गलम्भगवान्०' इस मंत्रसे तत्पश्चात् यजमान अपने हाथमें अक्षत ले 'ॐ यान्तु देव०' इस मंत्रको कह सब आवाहित देवताओंका विसर्जन अक्षत छोडकर कर देवे। फिर हाथ जोड 'ॐ यस्य स्मृत्या०' इत्यादि श्लोक कह विष्णुका स्मरणकर हाथमें जलले 'अनेक कर्मणा०' इस वाक्यको कह जल छोड

नापितादीन् सन्तोषयेताम् । तथासनादुत्तिष्ठन्तौ ब्राह्मणान्, गुरून्, वृद्धांश्च प्रणमेताम् ॥ इति ॥ अथाग्रे यथाविहितकाले शुभे मुहूर्त्ते वरगृहे कन्यागृहे च तत्पित्रादयः शास्त्रविहितैः स्वकुलदेशाऽऽचारैः मृत्तिकामाङ्गल्यादिकर्म कुर्याताम् ॥ इति वरवरण ( तिलक ) प्रयोगः ॥

अथ अकृतगर्भाधानादिसंस्कारप्रायश्चित्तम् ।

तत्रादौ यदि कन्याया गर्भाधानादिचूडाकर्मपर्यन्ता अष्ट संस्काराः स्वस्वकाले न कृताः स्युश्चेत्तदातिक्रान्तगर्भाधानादिसंस्कारलोपजनितप्रायश्चित्तं सङ्कल्पपुरस्सरमनादिष्टहोमं च बौधायनस्मृत्युक्तप्रकारेण पिता कुर्यात् ॥ तथैव वरस्यापि च यदि गर्भाधानादिसंस्काराः स्वस्वकाले न कृताः स्युस्तथोपनयनावसरेऽप्यतिक्रान्तगर्भाधानादिसंस्कारलोपजनितप्रायश्चित्तं न कृतश्चेत्तदातत्पितापि स्वगृहेऽवश्यमेव प्रायश्चित्तप्रयोगं कुर्य्यात् ॥

देवे । फिर नापितादिकोंको भी द्रव्यादि द्वारा संतुष्टकर आसनसे उठे और ब्राह्मण गुरु और वृद्धोंको प्रणाम करे इस प्रकार कर्मके बाद यथाविहित कालमें वरगृह और कन्यागृहमें अपने देश--कुलके अनुसार मृतिका माङ्गल्यादि कर्मोंको करें ॥ इति बालबोधिनीटीकायां वरवरण ( तिलक ) प्रयोगः ॥

अब गर्भाधानादि संस्कार जिनका नहीं हुआ उनके लिये प्रायश्चित्त लिखतेहैं--कि, पिताने यदि कन्याका विवाह करना निश्चित कर लिया और उसका गर्भाधानादि चूडाकर्मपर्यन्त आठ संस्कार अपने अपने समय पर नहीं किये गये हैं तो उन छूटे हुये गर्भाधानादिसंस्कारोंके लोपका प्रायश्चित्त संकल्पपूर्वक अनादिष्टहोम बौधायनस्मृतिके अनुसार पिता अवश्यही करलेवे । तथा वरकाभी गर्भाधानादिं संस्कार अपने कालोंपर यदि नहीं किये गये हों और उपनयनसंस्कारकरनेके अवसरमें भी यदि संस्कारोंके लोपका प्रायश्चित्त नहीं किये गये हों तो वरके पिताको भी चाहिये कि, अपने यहां प्रायश्चित प्रयोग अवश्यही करें ॥

अथ बौधायनस्मृत्युक्तातिक्रान्तगर्भाधानादिसंस्कारलोपजनितप्रायश्चित्तप्रयोगः । तत्र कन्यागृहे कन्यापिता, वरस्यापि प्रायश्चित्तकरणे वरपितापि च स्वस्वगृहे वरवरणकर्मानन्तरं कस्मिंश्चिदपि शुभे दिने, अथवा मण्डपाच्छादनान्ते विवाहदिवसात् प्रागेव यथावकाशं वा शुभे दिने कन्यापिता कन्यासहितो वरपिता वरसहितः सपत्नीकः मङ्गलं स्नात्वा अहतवाससी परिधाय धृतमङ्गलतिलकोऽलङ्कारादिभिरलंकृतः यत्र कुत्रापि गोमयोपलिप्तायां शुद्धायां भूमौ मण्डपे वा शुभासने पूर्वाभिमुख उपविश्य स्वदक्षिणतः पत्नीं तद्दक्षिणतः कन्यां पुत्रं वोपवेश्य धृतपवित्रपाणिः, आचम्य प्राणानायम्य कुशानीतजलैः-

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरी काक्षःपुनातु ॥ इति सपत्नीकं कन्यासहितं पुत्रसहितं वा आत्मानं सर्वसंभारांश्च

अतिक्रान्त गर्भाधानादि संस्कारलोपजनित प्रायश्चित्तका प्रयोग बौधायनस्मृतिमें कहे प्रकारसे लिखते हैं। कन्यागृहमें कन्याका पिता और वरके लिये भी प्रायश्चित्त करना हो तो वरपिता भी अपने गृहमें कर्म करे। कन्याका "आवरण" तथा वरका "तिलक" होनेसे पहिले ही अथवा इन कर्मोंके हो जानेके पीछे ही किसी शुभदिनमें मण्डपाच्छादन होनेके पहिले या पीछे अर्थात् विवाह होनेके दिनसे पहिलेही जिस सुन्दरदिनमें अवकाश हो कन्याका पिता कन्यासहित, वरका पिता वरसहित सपत्नीक मङ्गलस्नान कर अहतवस्त्रोंका जोडा पहिन माथेमें कुंकुमादिका तिलक लगाय सुन्दर आभूषणोंसे समलङ्कृत हो गोमयसे लिपीहुई कहीं पवित्रभूमिमें अथवा मण्डपहीमें आय शुभासनपर पूर्वाभिमुख स्वयं बैठ अपने दहिने स्त्रीको और उसके दहिने संस्कार्यपुत्र अथवा कन्याकोभी बैठाकर अपने हाथोंमें कुशकी पवित्री पहिन तीन बार जलका आचमन कर फिर जलसे कुशोंद्वारा 'ॐ अपवित्रः' से 'पुनातु०' पर्य्यन्त कहता हुआ पत्नी और कन्या या पुत्रसहित अपने तथा सभी

संप्रोक्ष्य द्रव्याक्षतपुष्पाण्यादाय " ओं सुमुखश्च " इत्यादि " जनार्दनाः " इत्यन्तं पठित्वा गणपतिस्मरणं कुर्य्यात् । श्रीमन्महागणाधिपतये नमः ध्यायामि । इति । ततः कुशजलान्यादाय प्रतिज्ञासंकल्पं कुर्यात् यथा-विष्णुरित्यादि देशकालसंकीर्तनान्ते अमुकगोत्र अमुकशर्मा ( कन्यापिता अमुकगोत्रायाः अमुकनाम्न्याः मम कन्यायाः ) ( वरपिता अमुकगोत्रस्यः अमुकनाम्नो मम पुत्रस्य ) स्वस्वकाले अकृतगर्भाधानादिसंस्कारजनितदोषपरिहारार्थमद्य शिष्टाचारप्राप्तं गणेशपूजनमादौ कृत्वा ततः कृच्छ्रत्रयात्मकप्रायश्चित्तप्रत्याम्नाययथाशक्ति गोनिष्क्रयद्रव्यदानपूर्वकं व्याहृत्याद्यनादिष्टहोमात्मकं प्रायश्चित्ताख्यकर्माहङ्करिष्ये । इति ॥ ततो विवाहमण्डपएव यदि कृतं भवेत्, तदा तु तत्र पूर्वावाहितानेव ॐ भूर्भुवः स्वः गणेशगौरीकलशाधिष्ठितादिसर्वमण्डपस्थिताभ्यो देवताभ्यो नमः । इति मंत्रेण स्नानीयम् जलम् गन्धम् अक्षतान् पुष्पाणि धूपम् दीपम् नैवेद्यम् । नैवेद्यान्ते आचमनीयम् जलम् ताम्बूलं पूगीफलं दक्षिणाम् समर्पयामि । इति पूजयित्वा हस्ते जलमादाय अनया पूजया गणेशादयोऽत्र पूजिता देवाः प्रीय-

समाग्रियोंपर जलसिञ्चन करे । तत्पश्चात् हाथमें द्रव्याक्षत और पुष्प ले " ॐ सुमुखश्चैक० " से " ध्यायामि " पर्यन्त श्लोकादि कह गणपतिस्मरण कर द्रव्यादि पृथ्वीपर छोड देवे । फिर कुशजल हाथमें ले इस प्रकार प्रतिज्ञा संकल्प करे कि-' ॐ विष्णु० ' इत्यादि देशकाल और अपना गोत्रनाम कहनेके उपरान्त कन्यापिता ' अमुकगोत्रायाः ' इत्यादि अपनी कन्याका और वरपिता-' अमुक गोत्रस्य० ' इत्यादि अपने पुत्रका गोत्र नामादि कह " स्वस्वकाले अकृत० " इत्यादि " कर्माहङ्करिष्ये " पर्यन्त कहकर जल छोड देवे ॥ यदि विवाहमण्डपहीमें कर्म आरम्भकिया हो तब तो पहिलेके आवाहित गणेशादिका " ॐ भूर्भुवः स्वः गणेश, गौरी० " इत्यादि नाममंत्रद्वारा स्नानसे दक्षिणापर्यन्त पूजनकर हाथमें जलले ' अनया० ' से ले आगे ' न

न्तान्न मम, इति जलमुत्सृजेत् । मण्डपाद्भिन्नस्थाने यदि भवेत् तदा पत्रपुटकादौ अक्षतपुञ्जोपरि पूगीफलं निधाय तत्र ॐ भूर्भुवः स्वः महागणपतये नमः । महागणपतिम् आवाहयामि स्थापयामि । इति गणपतिमेवमावाह्य पूजनं सर्वोपचारैः कुर्यात् ॥ ततस्त्वेकं ब्राह्मणं गन्धादिभिः संपूज्य हस्ते कृच्छ्रत्रयात्मकगोनिष्क्रयभूतं रजतं सुवर्णद्रव्यं वा कुशजलसहितञ्चादाय ॐ पूर्व्वोच्चारितशुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( कन्यापिता अमुकगोत्रायाः अमुकनाम्न्या मम कुमार्याः कन्यायाः ) ( वरपिता तु अमुकगोत्रस्य अमुकशर्मणः मम पुत्रस्य ) स्वस्वकाले अकृतगर्भाधानादिसंस्कारजनितदोषपरिहारार्थं कृच्छ्रत्रयात्मकप्रत्याम्नायेन इदं यथाशक्ति गोनिष्क्रयद्रव्यं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय तुभ्यमहं संप्रददे ॥ इति संकल्प्य ब्राह्मणाय दद्यात् ॥ यदि अग्रे वक्ष्यमाणाहोमादिकर्म कर्त्तुं स्वयमशक्तश्चेत्तदाचार्यद्वारा कारयेत् । तद्यथा–आचार्यार्थमेकं ब्राह्मणंगन्धादिभिः संपूज्य वरणसामग्रीं कुशजलादिकञ्चादाय ॐ अद्य-

मम ' पर्यंत कह जल छोड़ देवे । यदि मण्डपसे भिन्नस्थानमें कर्मारंभ किया हो तो किसी पात्रमें अक्षतपुञ्जपर एक सुपारीधर उसपर " भूर्भु० " इत्यादिनाममन्त्रसे आवाहनादि समस्तपूजन करे फिर यजमान किसी सुपात्र ब्राह्मणको गन्धादिसे पूजनकर अपने हाथमें तीन कृच्छ्रका गोदान अथवा गोनिष्क्रय रूप चांदी वा सुवर्ण द्रव्य कुशजलसहित ले ' ओंपूर्वोच्चरित० ' आदि अपना गोत्रनामपर्य्यन्त कह कन्यापिता–" अमुक गोत्रयाः " इत्यादि अपनी कन्याका गोत्रनाम कहे और वरपिता ' अमुकगोत्रस्य ' इत्यादि अपनेपुत्रका गोत्रनाम कहनेके वाद ' स्वस्वकाले " इत्यादि ब्राह्मणके गोत्रनामोंको कहता हुआ "संप्रददे" पर्यन्त कह कर सुपूजित ब्राह्मणके हाथमें द्रव्यादि दे देवे ॥ तत्पश्चात् होमादि कर्म करनेमें यदि स्वयम् असमर्थ हो तो ब्राह्मणको आचार्यकर्म करनेकेलिये वरण कर उसीके द्वारा कर्म करे॥सो इस प्रकार है कि,आचार्य होनेकेलिये एक ब्राह्मणकी पूजा गंधादिसे कर हाथमें वरणसामग्रीसहित कुशजल ले 'ॐ अद्य'

अमुकगोत्रः अमुकशर्म्मा ( कन्यापिता अमुकगोत्रायाः अमुकनाम्न्याः ममकन्यायाः ) ( वरपिता तु—अमुकगोत्रस्य अमुकशर्मणः मम पुत्रस्य ) अकृतगर्भाधानादिसंस्कारजनितदोषपरिहारार्थकर्त्तव्यप्रायश्चित्तहोमकर्मणि आचार्यकर्म कर्त्तुं अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिः द्रव्यादिभिराचार्यत्वेन त्वामहं वृणे ॥ ॐ वृतोऽस्मीति प्रतिवचनम् । ॐ यथाविहितं कर्म कुरु । इति यजमानः ॐ करवाणि इति आचार्यो वदेत् । ततः आचार्यः पूर्वाभिमुख उपविश्याचम्य प्राणानायम्य हस्ते कुशादीन्यादाय ॐ अद्येत्यादि, अमुकगोत्रः अमुकशर्म्मा अमुगोत्रेण अमुकशर्मणा यजमानेन वृतोऽहमाचार्य्यकर्म करिष्ये । इति संकल्प्याऽग्निस्थापनादि कर्म कुर्य्यात् । यदि स्वयमेव कर्त्ता भवेत्तदाचार्यवरणमकृत्वा स्वयमेवाग्निस्थापनादि कर्म कुर्य्यात् । इति ॥

## अथाग्निस्थापनम् ।

तत्र तुषकेशशर्करादिरहितस्थण्डिलोपरि भूमिं कुशैः परि—

इत्यादि, अमुक स्थानोंमें नामोंको कन्यापिता या वर पिता अपने अपने अनुसार 'वृणे' पर्य्यन्त संकल्प कर पूजित ब्राह्मणको देदेवे । और ब्राह्मणवरणसामग्री ले "ॐ वृतोस्मि" ऐसा प्रतिवचन कह देवे फिर यजमान 'ॐ यथा विहि०' आदि कहे । और ब्राह्मण 'ॐ करवाणि' ऐसा प्रतिवचन कहके यजमानके स्थानमें स्वयं, आचार्य बैठ जलसे तीन वार आचमन और प्राणायाम कर हाथमें कुशजलादि ले "ॐ अद्य०" इत्यादि कह अमुकके स्थानोंमें नामोंको कहता हुआ "करिष्ये" पर्य्यन्त पूराकर जल छोड़देवे । और आगेका कर्म अग्निस्थापनादि आचार्य ही आरम्भ करे ॥ यदि यजमान स्वयम् होमादि कर्म करनेमें प्रवृत्त हो तो आचार्यके वरणसे यहाँ प्रतिज्ञा संकल्पपर्य्यन्त कर्मोंको नहीं कर गोनिष्क्रय देनेके पश्चात् अपने आसनपर बैठे ही अग्निस्थापनादि सभी कर्मोंको आरम्भ करदेवे ॥

समुह्य, तान्कुशानीशान्यां परित्यज्य गोमयोदकेनोपलिप्य श्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणैवानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य ततः-कांस्यपात्रेणाग्निमानीय स्वाभिमुखं तत्र निदध्यात् । तद्रक्षार्थं किञ्चिदिन्धनं नियुज्य आनीताग्निपात्रे जलाक्षतादि क्षिपेत् ॥ ततः हस्तेऽक्षतान् गृहीत्वा अग्ने विटनाम शाण्डिल्यगोत्र शाण्डिल्याऽसितदेवलेति त्रिप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम संमुखो भव ॥ इत्यक्षतान् प्रक्षिप्य विटनामाग्निं प्रतिष्ठाप्य, ब्रह्मवरणं कुर्य्यात् । तद्यथा—हस्ते पुष्पचन्दनताम्बूलवासांस्यादाय । ॐ अद्य ( कन्यापिता—अमुकगोत्रायाः अमुकीनाम्न्याः कन्यायाः ( वरपिता तु अमुकगोत्रस्य अमुकशर्मणः पुत्रस्य ) अकृतगर्भाधानादिसंस्कारजनितदोषपरिहारार्थकर्तव्यप्रायश्चित्तहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्र-

अग्निस्थापन प्रयोग—इस प्रकार है कि—भूसी केश, कंकड़ी और भस्म आदि रहित हवनार्थ पहिलेसे बनी वेदीकी भूमिको कुशोंद्वारा चारोंतरफसे बटोरकर उन कुशोंको ईशानकोणमें फेंक उस बटोरे स्थानको गोबर और जलसे लीप, इस लिपे स्थानपर स्रुवके मूलसे प्रादेशमात्र प्रागग्र उत्तरोत्तरक्रमसे तीन रेखा वेदीमें खींचै, और उल्लेखन क्रमही करके प्रत्येक रेखाओंपरसे अनामिका और अंगुष्ठ द्वारा मट्टी उठाउठाकर फेंक रेखास्थानोंपर जल छिडक दे । फिर कांसेके पात्रमें अग्निको रख आग्नेय दिशासे ले आकर पश्चिममुख विटनाम इस अग्निको स्वयं पूर्वमुख होकर वेदीमें स्थापनकर इसके रक्षित रहनेके लिये कुछ इन्धन इसमें लगा देवे और जिस पात्रमें धरके अग्नि लाये हैं उस पात्रमें जलाक्षतादि छोड़ देवे । और हाथमें अक्षत ले 'अग्नेविट नाम' इत्यादि 'सम्मुखो भव' पर्यन्त कह विट नाम अग्निकी प्रतिष्ठा करके ब्रह्माका वरण करे । सो इसप्रकार कि, वरणकी सामग्री पुष्प, चन्दन, ताम्बूल, वस्त्रादि कुश जल सहित हाथमें ले 'ॐअद्य०' इत्यादिकह कन्यापिता—'अमुक गोत्रायाः इत्यादि कन्याका गोत्र नाम वा वरपिता 'गोत्रस्य' इत्यादि पुत्रका गोत्र

ममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ इति ब्रह्माणं वृणुयात् ॥ ॐ वृतोऽस्मि इति प्रतिवचनम्। ततोऽग्नेर्दक्षिणतः शुद्धमासनं निधाय तदुपरिप्रागग्रान्कुशानास्तीर्य, अग्निप्रदक्षिणतो ब्रह्माणमानीय अस्मिन् कर्मणि त्वं मे ब्रह्मा भव इत्यभिधाय, भवानि इति तेनोक्ते तदासनोपरि ब्रह्माणमुदङ्मुखमुपवेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा, वारिणा परिपूर्य्य, कुशैराच्छाद्य, ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानान्तमुत्तराग्रान्। ब्रह्मणोऽग्निपर्य्यन्तं पूर्वाग्रान्। नैर्ऋत्याद्वायव्यान्तमुत्तराग्रान्। अग्नितः प्रणीतापर्य्यन्तं पूर्वाग्रान् कुशान् स्तृणुयात् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम्, पवित्रकरणार्थं साग्रमनन्तर्गर्भम्

नाम कहकर 'अकृत' इत्यादि 'वृणे' पर्यन्त पूरा कह वस्त्रादि ब्राह्मणको देदेवे। और ब्राह्मणभी 'ॐवृतोऽस्मि' ऐसा कहै। फिर यजमानके 'यथाविहितं इत्यादि कहनेपर, 'ब्रह्मा'ॐकरवाणि ऐसा कहै। तब अग्निसे दक्षिणमें शुद्धासन, विछाय उसपर कुशोंको पूर्वाग्र फैलाय कर, अग्निके पूर्वतरफसे ब्रह्माको ले आकर 'अस्मिन् कर्मणि त्वं मे ब्रह्मा भव' ऐसा कह, ब्रह्माके'भवानि' ऐसा कहने पर, उसी बिछाये आसनपर ब्रह्माको उत्तराभिमुख बैठा देवे। फिर प्रणीतापात्रको अपने आगेकर. उसमें जलभर और कुशोंसे आच्छादित कर ब्रह्माकी ओर देख अग्निसे उत्तरमें बिछे हुए कुशोंपर रखदेवे। तदनन्तर, परिस्तरण अर्थात् अग्निके सब ओर कुशोंको इस प्रकार बिछावे कि–बर्हिषश्चतुर्थभाग, अर्थात् ८१ कुशोंके चौथाई भाग २० कुशोंको अग्निकोणसे ईशानको तांई उत्तराग्र बिछावे। दूसरा २० कुशोंका भाग ब्रह्मासे अग्निपर्य्यन्त पूर्वाग्र। तीसरा २० कुशोंका भाग नैर्ऋत्यकोणसे वायव्यकोणपर्यन्त उत्तराग्र। और चौथा २० कुशोंका भाग अग्निसे प्रणितापर्य्यन्त पूर्वाग्र बिछादेवे। तथा एक कुशसे वाम हाथ खाली नही करे। तत्पश्चात् अग्निसे उत्तरमें पश्चिम दिशासे पूर्वके तरफक्रमसे पात्रोंका रखना इस प्रकार आरम्भकरे कि–पवित्रच्छेदनार्थ तीन कुश १। पवि-

कुशपत्रद्वयम् प्रोक्षणीपात्रम् आज्यस्थाली सम्मार्जनकुशाः उपयमनार्थं वेणीरूपकुशाः समिधस्तिस्रः स्रुवः आज्यम् षट्पश्चाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रम् पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयम् ॥ इति पात्रासादनम् ॥ ततः पवित्रच्छेदनकुशैः प्रादेशमिते पवित्रे प्रमाप्य छित्त्वा सपवित्रदक्षिणकरेण प्रणीतोदकम् त्रिः प्रोक्षणीपात्रे प्रक्षिप्य अनामिकाङ्गुष्ठाभ्याम् उत्तराग्रे गृहीतपवित्राभ्याम् तज्जलं किञ्चित् त्रिरुत्क्षिप्य ततः प्रोक्षणीपात्रस्य सव्यहस्ते करणम् अनामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिङ्गनम् । पुनः प्रणीतोदकेन प्रोक्षणीपात्रं त्रिरभिषिच्य प्रोक्षणी-

त्रक बनानेकेलिये एककुशमेंसे बीचोबीचवाले दो पत्र अग्रभागसहित निकालै जिन दो पत्रोंके बगलमें तीसरा और कोई पत्र नहीं लगरहा हो ऐसे दोनों कुशपत्र २ । प्रोक्षणीपात्र ३ । आज्यस्थाली ४ । सम्मार्जनकेलिये तीन कुश ५ । उपयमनके लिये चोटीके समान गुंथे, अग्रछोरमें गन्थिलगे अर्थात् वेणीरूप तीन कुश ६ । अंगुष्ट समान मोटी, छिलका लगी. विना चिरी या घुनी प्रादेशमात्र लंबी कटी हुई ऐसी तीन समिधा ७ । छिडल आदिकी तीन लकडी । स्रुवा ८ । आज्य ९ । यजमानके दोसौ छप्पन मुट्ठी चावलोंकापूर्ण पात्र १० । इन १० वस्तुओंका स्थापन पवित्रछेदनके कुशोंसे पूर्वपूर्वमें क्रमसे करके तत्पश्चात् पवित्र छेदनके तीन कुशोंसे अग्रसहित प्रादेशमात्र नपेहुए पवित्रके दो कुशपत्रोंको काटकर इन नपी कटीहुई पवित्र नामकी दो पत्तियोंको लेकर बांकी कटे व काटनेवाले कुशोंको फेंकदेवे । फिर इन दो पवित्रपत्रोंको लिये हुए दहिने हाथसे प्रणीताका जल तीन बार लेकर प्रोक्षणीपात्रमें छोडे । फिर दोनों हाथके अनामिका और अंगुष्ठसे उत्तराग्र पकडे हुए दो पवित्रक कुशपत्रोंसे प्रोक्षणीका दल तीनबार ऊपरको उछाले फिर बायें हाथमें प्रोक्षणीपात्रको लेकर दहिने हाथकी अनामिका और अंगुष्ठसे पकडे हुए पवित्रोंद्वारा उसके जलको तीनवार ऊपरके तरफ उछाले । फिर प्रणीताके जलसे तीन बार

जलेन यथासादितवस्तुसेचनं कृत्वा अग्निप्रणीतापात्रयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ आज्यस्थाल्यां आज्यनिर्वापः। ततोऽधिश्रयणं कृत्वा कुशान्प्रज्वाल्य आज्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तान्प्रक्षिप्य स्रुवं त्रिः प्रतप्य सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिपैः प्रतप्य अग्नेर्दक्षिणतो निदध्यात्। ततः आज्यमग्नेरवतार्य त्रिः प्रोक्षणीवत् उत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरस्य पुनः प्रोक्षण्युत्पवनम्। तत उत्थाय उपयमनकुशान् वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्तास्तिस्त्रः समिधः एकैकमग्नौ क्षिपेत्। तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेण ईशानादि उदगपवर्गमग्निं पर्युक्षणं कृत्वा प्रणितापात्रे पवित्रे निधाय। ततो वक्ष्यमाणक्रमेण समिद्धतमेऽग्नौ स्रुवेण आज्याहुतीर्जु-

प्रोक्षणीको प्रोक्षणकर, इस प्रोक्षणीके जलसे यथाक्रम स्थापित सब वस्तुओंको एक एककर सिञ्चन कर देवे। फिर इस प्रोक्षणीपात्रको अग्नि और प्रणीताके बीचमें रख देवे। तत्पश्चात्—आज्यस्थालीमें घीको छोड वेदीके अग्निपर तपनेके लिये रखदेना। और जलतेहुये कुशों या कोई तृणोंको अग्निपर तपतेहुये घृतके सब ओर प्रदक्षिणक्रमसे घुमाकर अग्निमें छोड देना। फिर स्रुवाके मुखको नीचे कियेहुये अग्नि पर तीनवार तपाना, फिर सम्मार्जनकुशोंके अग्रभागसे स्रुवाके भीतर तथा मूलभागसे बाहर सम्मार्जन कर पूनः प्रणीताजलसे पवित्रोंद्वारा स्रुवाको सिञ्चन करे। तत्पश्चात् अग्निपर स्रुवाको तीनवार तपायकर अग्निसे दक्षिणमें कुशोंके ऊपर धर देवे। तब तपेहुये घृतपात्रको अग्निपरसे उतार, घृतको पवित्रोंद्वारा प्रोक्षणीके तुल्य ऊपरके तरफ चलताहुआ देखे, यदि उस घृतमें कोई अन्य वस्तु पडी हो तो उसे निकाल कर फेंक देवे। पुनः प्रोक्षणीके जलको पवित्रोंद्वारा तीनवार ऊपरको उछाले। तब उपयमन अर्थात् वेणीरूप कुशोंको वामहस्तमें लेकर खडा हो प्रजापतिका ध्यान मनमें करता हुआ, घृतसे लिपीहुई तीन समिधाओंको एकएक करके तीन वारमें

हुयात्। यथा—आघारावाज्यभागौ च हुत्वा पुनर्व्यस्तसमस्तव्याहृती-श्चतस्रः पञ्च वारुणा इति नवाहुतीश्चाज्येनैव जुहुयात्। सर्वत्राहुत्यनन्तरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः। तद्यथापातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धो यजमानः होमकर्त्ता ) जुहुयात्। ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम॥ इतिमनसा। ॐ इन्द्राय स्वाहा। इदमिन्द्राय न मम॥ इत्याघारौ २॥ ॐ अग्नये स्वाहा। इदमग्नये न मम॥ ॐ सोमाय स्वाहा। इदं सोमाय न मम॥ इत्याज्यभागौ २। इति हुत्वा पुनः ॐ भूः स्वाहा। इदमग्नये न मम १॥ ॐ भुवः स्वाहा। इदं वायवे न मम २॥ ॐ स्वः स्वाहा। इदं सूर्याय न मम॥ ३॥ ॐ भूर्भुव स्वः स्वाहा। इदं प्रजापतये न मम॥ ४॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासि सीष्ठा ÷।

विना मन्त्रादि कुछ बोलेही अग्निमें छोड देवे। फिर आसनपर बैठ, पवित्रसहित प्रोक्षणीजलसे ईशानकोणसे उत्तरदिशापर्य्यन्त प्रदक्षिणक्रमसे अग्निके सब ओर पर्युक्षण कर प्रोक्षणीका जल सब गिरादेवे। और पवित्रोंको प्रणीतापात्रमें धर देवे। फिर आगे कहेहुये क्रमोंसे खूब जलतेहुये अग्निमें स्रुवाद्वारा घृतकी आहुतियोंको इस प्रकार देवे कि, पहिले आधार नामकी दो और आज्यभाग नामकी दो. यह ४ आहुतियोंको देकर, तब व्याहृतियोंकी अलग अलग तीन और सब व्याहृतियोंको मिलाकर एक यह चारों आहुतियां तथा पांच वारुण इन कुल नव आहुतियोंका नाम सर्वप्रायश्चित्त या अनादिष्ट है, इनको भी घृतसेही देवे। सब आहुतियोंको ‘ स्वाहा ’ कहकर अग्निमें छोडनेके पीछे, स्रुवामें बचे हुये घृतबिन्दुओंको प्रोक्षणीपात्रमें गिराता जावे और त्यागवचन ‘ न मम ’ पर्यंत कहता जावे। सो इस प्रकार कि, अपने दक्षिणजानुको पृथ्वीपर टेकेहुये कुशोंद्वारा ब्रह्मासे अन्वारब्धहुआ यजमान, मनमें प्रजापतिका ध्यान कर प्रथमाहुति “ओंप्रजापतये०” इत्यादि मूलमें कहे मन्त्रोंद्वारा अर्थात् दो आधार, दो आज्यभाग देकर फिर “ओंभूः” इत्यादि अनादिष्ट नवआहुतियोंको देवे। तत्पश्चात् फिर भी महाव्याहृत्यादि स्विष्टकृत्पर्यन्त दश आहुतियोंको घृतहीसे

यजिष्ठो वह्नितम ँ शोशुचानो विश्वाद्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा (य० अ० २१ मंत्र ३) । इदमग्नीवरुणाभ्यां न मम ॥ १ ॥ ॐ सत्त्वन्नोऽअग्नेऽवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्वनो व्वरुण ँ रराणोव्वीहिमृडीक ँ सुहवो न ऽ एधि स्वाहा (य० अ० २१ मंत्र ४) । इदमग्नीवरुणाभ्यां न मम ॥ २ ॥ ॐ अयाश्चाग्ने ऽ स्यनभिशस्तिपाश्च सत्यमित्त्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजᳬस्वाहा । इदमग्नये अयसे न मम ॥ ३ ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ४ ॥ ॐ उदुत्तमं व्वरुणपाशमस्म्मदवाधमं व्विमध्यम ᳬश्रथाय । अथाव्वयमादित्यव्व्रते तवानागसोऽअदितये स्याम स्वाहा (य० अ० १२ मंत्र १२) । इदं वरुणाय न मम ॥ ५ ॥ एताः सर्वप्रायश्चित्ताहुतयः, एता एवानादिष्टा वा आहुतयः ॥ इति नवाहुतयः ॥ एतदनन्तरं पुनरपि महाव्याहृत्यादिस्विष्टकृदन्ता दशाहुतीश्चाज्येनैव हुत्वा संस्रवप्राशनादिप्रणीताविमोकनान्तं होमशेषं समापयेत् । तदपि यथा— ॐ भूः स्वाहा । इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा । इदं वायवे न मम ॥ २ ॥ ॐ स्वः स्वाहा । इदं सूर्य्याय न मम ॥ ३ ॥ एता महाव्याहृतयः ॥ ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान् देवस्य हेडोऽअवयासि सीष्ठाः । यजिष्ठो

देकर संस्रव प्राशनादि प्रणीताविमोकपर्य्यन्त होमके कर्मोंको पूरा करे, सो इस प्रकारहै कि 'ॐ भू स्वाहा' इत्यादि मूलमें लिखे स्विष्टकृत्पर्यन्त दशमन्त्रोंसे आहुति

वह्नितमः शोशुचानो विश्वाद्वेषा७ सि प्रमुमुग्ध्यस्म्मत्स्वाहा (य० अ० २१ मं० ३ ) इदमग्नीवरुणाभ्यां न मम ॥ ४ ॥ ॐ सत्त्वन्नोऽअग्नेऽवमोभवोतीनेदिष्ठोऽ अस्याऽउषसो व्युष्टौ। अवयक्ष्वनो वरुण७ रराणो वीहि मृडीक७ सुहवो न ऽ एधि स्वाहा। ( य० अ० २१ मं० ४ ) इदमग्नीवरुणाभ्यां न मम ॥ ५ ॥ ÷ ॐ अयाश्चाग्नेऽस्य-नभिशस्तिपाश्च सत्यमित्त्वमया असि। अयानो यज्ञं वहास्ययानो धेहि भेषज७स्वाहा। इदमग्नये अयसे न मम ॥ ६ ॥ ÷ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ७ ॥ ॐ उदुत्तमंवरुणपाश-मस्म्मदवाधमं विमध्यम७ श्रथाय। अथावयमादित्यव्व्रते तवानागसोऽ अदितये स्याम स्वाहा ( य० अ० १२ मं० १२ )। इदं वरुणाय न मम ॥ ८ ॥ एताः सर्वप्रायश्चित्ताहुतयः ॥ ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम ॥ ९ ॥ इति मनसा प्राजापत्यम् ॥ ॐ अग्नये स्विष्ट-कृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ १० ॥ इति स्विष्टकृद्धोमः ॥ ततः संस्रवप्राशनम्। आचमनञ्च कृत्वा ब्रह्मणे पूर्णपात्रदक्षिणां दद्यात् ॥ ॐ अद्यैतस्मिन् प्रायश्चित्तहोमकर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्मप्रति-ष्ठार्थमिदं पूर्णपात्रं प्रजापतिर्दैवतं अमुकगोत्राय अमुकशर्मणे ब्रह्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे ॥ इति दक्षिणां दद्यात्।

करके, फिर प्रोक्षणीपात्र में गिरायेहुये संस्रवका प्राशन कर, हाथ धोय, फिर तीन आचमन जलसे कर हाथमें कुश जलसहितपूर्णपात्र ले 'ॐ अद्यैतस्मिन्०' इत्यादि नाम गोत्र कहता हुआ 'संप्रददे' पर्यन्त पूरा संकल्प कर ब्रह्माको दे देवे।

ॐ स्वस्ति । इति प्रतिवचनम् । ततः प्रणीतापात्रस्थिते पवित्रे अनामिकाङ्गुष्ठाभ्यां गृहीत्वा, ॐ सुमित्रिया नऽ आप ओषधयः सन्तु ॥ इति पवित्राभ्यां प्रणीताजलमानीय, तेन शिरः संमृज्य, ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयंद्विष्मः ॥ (य० अ० ३५ मं० १२) इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्रमेण पवित्रसहितसर्वबर्हिरुत्थाप्य घृतेनाभिघार्य हस्तेनैव जुहुयादनेन मंत्रेण—ॐ देवा गातु विदो गातुं वित्त्वागातुमित । मनसस्पतऽइमन्देवयज्ञᳬस्वाहा वातेधाः स्वाहा (य० अ० ८ मं० २१) इदं वाताय न मम ॥ इति बर्हिर्होमः ॥ ततः फलपुष्पसमन्वितघृतपूर्णेन स्रुवेण उत्तिष्ठन् पूर्णाहुतिं दद्यात् । (कर्मकर्त्ता आचार्यश्चेत् तदा सपत्नीकयजमानेन संस्कार्येण च सहितः आचार्य एव पूर्णाहुतिं कुर्यात्) ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् । कविᳬ सम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः स्वाहा (य० अ० ७ मं० २४) ॥ इदमग्नये विट्नाम्ने न मम ॥ तत उपविश्य स्रुवेण भस्मानीय दक्षि-

और ब्रह्मा 'ॐस्वस्ति' कहकर लेलेवे । तत्पश्चात् यजमान, प्रणीतामें धरे पवित्रके कुशपत्रोंको अनामिकांगुष्ठों द्वारा लेकर 'ॐ सुमित्रिया न०' मन्त्र पढ इन पवित्रोंसे प्रणीताका जल अपने शिरपर मार्जन करे और 'ॐ दुर्मित्रिया' मन्त्रसे प्रणीताको ईशानकोणमें औंधा कर देवे । फिर स्तरण क्रमसे पवित्रोंसहित सब कुशोंको उठाके उनमें, आज्यस्थालीसे घी लगाकर ॐ 'देवगातु०' मन्त्रद्वारा 'न मम' पर्यन्त कह हाथसे ही होम कर देवे । तदनन्तर संस्कार्य और स्त्री सहित यजमान खडा हो स्रुवको घृतसे पूरितकर पुष्प नारियल या सुपारीसहित स्त्री और संस्कार्यके दहिने हाथसे स्पर्शकरायेये, स्रुवाद्वारा घृतादि द्रव्योंसे 'ॐ मूर्द्धानं' आदिसे 'न मम' पर्यन्त

णानामिकाग्रगृहीतभस्मना—ॐ त्र्यायुषं जमदग्नेरिति ललाटे । ॐ कश्यपस्य त्र्यायुषम् इति ग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले । ॐ तन्नोऽअस्तु त्र्यायुषम् ( य०अ०३मं०६२ ) इति हृदि ॥ इति ललाटादौ भस्म योजयेत् ॥ एवम् स्ववध्वाः संस्कार्यस्य चापि कुर्यात्; तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः । ( आचार्यस्तु स्वयं कृत्वा ततो यजमानस्य कुर्यात् ) इति ॥ ततः आचार्यसत्त्वे आचार्याय दक्षिणां दद्यात् । यथा—ॐ अद्यकृतैतत्प्रायश्चित्तहोमकर्मणः पूर्णतासिद्ध्यै अमुकगोत्राय अमुकशर्मणे आचार्याय यथाशक्ति दक्षिणां तुभ्यमहं संप्रददे । ॐ स्वस्ति इत्युक्त्वा दक्षिणां गृहीत्वा स्वहस्ते पूगीफलम् अक्षतान वा गृहीत्वा ॐ अद्य यन्मया भवन्नियोगेनाऽस्मिन् प्रायश्चित्तहोमकर्मणि आचार्यकर्म कृतं तेनोत्पन्नं यच्छ्रेयस्तेन त्वं पुण्यवान् भव ॥ इत्युक्त्वा पूगीफलं यजमानाय दद्यात् । ततो यजमानः स्वहस्ते द्रव्यकुशादीन्यादाय ॐ अद्यास्मिन्कर्मणि

त्याग सहित मन्त्र पढ पूर्णाहुति कर देवे ॥ फिर अपने स्थानोंपर बैठ यजमान स्रुवाद्वारा हवनाग्निसे भस्म ले अपने हाथकी अनामिकांगुलिके अग्र भागसे 'ॐत्र्यायुषं०' से अपने ललाटमें 'ॐकश्यप०' से कण्ठमें 'ॐयद्देवेषु०' से दहिने कन्धेमें और 'ॐतन्नो' से हृदयमें भस्म लगावे । इसीके अनुसार स्त्री और कन्या वा पुत्रके भी ललाटादिमें भस्म लगावे, परञ्च स्त्री और संस्कार्यके अङ्गोंमें लगाते समय 'तन्नो' के स्थानमें 'तत्ते' ऐसा कहे ॥ यदि आचार्यद्वारा यहां तक कर्म हुआ हो तो आचार्यही स्त्री और कन्या या पुत्र सहित यजमानके भस्म लगावे ॥ और यजमान आचार्यकी दक्षिणा और कुशादि हाथमें ले 'ॐअद्य०' इत्यादि गोत्रनाम 'संप्रददे' पर्यन्त पूरा संकल्प कह आचार्यको दे देवे । 'ॐस्वस्ति' ऐसा आचार्य कह दक्षिणाले तब अपने हाथमें एक सुपारी या अक्षत लेकर 'ॐअद्य यन्मया' इत्यादि वाक्योंको कहकर यजमानको सुपारी या अक्षत दे देवे । तदन्तर यजमान अपने हाथमें भूयसी

न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृजे ॥ इति भूयसीं दक्षिणां च दद्यात् ॥ यद्यादौ गणेशावाहनं कृतञ्चेत्तदा अक्षतान् गृहीत्वा ॐ भो गणेश स्वस्थानं गच्छ । इत्यक्षतान् प्रक्षिप्य गणेशं विसृजेत् । एवम् ॐ विटनामाऽग्ने स्वस्थानं गच्छ इत्यग्निश्च विसृज्य, ॐ यस्य स्मृत्या च नामोक्त्या व्रतपूजा क्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १ ॥ इति प्राथ्र्य श्रीविष्णुः ३ इति त्रिः स्मरेत् । ब्राह्मणान् प्रणम्याशिषं गृहीत्वोत्तिष्ठेत् ॥ इति अकृतगर्भाधानादिप्रायश्चित्तप्रयोगः ॥

## अथ दिनशुद्ध्यादिविचारः ।

तत्र विवाहात्प्राक्कर्त्तव्यानामावश्यककृत्यानां दिनशुद्धिं मूहूर्त्तचिन्तामणौ विवाहप्रकरणे आह—

विधोर्बलमवेक्ष्य वा दलनकण्डनं वारकं
गृहाङ्गणविभूषणान्यथ च वेदिकामण्डपान् ।

दक्षिणा कुश जल सहित ले 'ॐअद्याऽस्मिन्०' इत्यादि संकल्प कर दक्षिणा बांट देवे ॥ यदि पहिले गणेशका आवाहन भी किया गया हो तो हाथमें अक्षत ले 'ॐभो गणेश०' इत्यादि वाक्यसे अक्षतोंको छोड़ गणेशका विसर्जन कर पुनः अक्षत ले 'ॐविटनामाग्ने०' इत्यादि वाक्यसे अग्निका भी विसर्जन कर हाथ जोड 'ॐ यस्य स्मृत्या०' इत्यादि श्लोक कह तीन वार 'ॐविष्णुः ३०' ऐसा कहदेवे । और ब्राह्मणोंको प्रणाम कर आशीर्वाद वे स्त्रीकी गांठ खोल सब कोई आसनसे उठे ॥ यह अकृतगर्भाधानादि प्रायश्चित्त प्रयोग पूरा हुआ ।

अब दिन शुद्ध्यादि विचार लिखते हैं । विवाहमें कन्यादान होनेसे पूर्वही जो आवश्यक कर्तव्य कृत्य हैं उनके करनेमें जो विचार मुहूर्तचिन्तामणि विवाहप्रकरण तथा दैवज्ञमनोहर ग्रन्थादिका प्रमाण यहां मूलमें लिखा है, उनका स्पष्टार्थ इस प्रकार होता है, विवाहसंबन्धी सभी अङ्ग और उपाङ्ग कर्मोंके करनेमें वर तथा कन्याका चन्द्रबल अवश्य ही विचार लेना चाहिये ।

सा याभिर्विञ्चामि सरस्वत्यै भैषज्ज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्ये न्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि । ( य० अ० २० मन्त्र ३ ) ७॥ ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रन्तन्न ऽआसुव ॥ ८ ॥ ( य० अ० ३० मं० ३ ) ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वे देवा यज्ञम्प्रावन्तु नः शुभे ( य० अ० १८ मं० ७६ ) ॥ ९ ॥ ॐ त्वं यविष्ठ दाशुषो नॄँ: पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ( य० अ० १३ मं० ५२ ) ॥ १० ॥ ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारन्तारिषऽऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ॥ ११ ॥ (य० अ० ११ मंत्र ८३ ) ॐ द्यौः शान्तिरन्तरिक्षँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वँ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि (य० अ० ३६ मं १७) ॥ १२ ॥ ॐ यतो यतः समीहसे ततो नोऽअभयङ्कुर । शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः ॥ १३ ॥ ( य० अ० ३६ मं० २२ ) ॐ पालाशं भवति तेन ब्राह्मणोभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणे वैनमेतदभिषिञ्चति । औदुम्बरं भवति तेन स्वोभिषिञ्चत्यन्नं वा ऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव ता वेदशनायेति तेनो कवितस्मादौदुम्बरे स्वोभिषिञ्चति ॥ १४ ॥ नैयग्रोधपादं भवति तेन मित्र्यो राजन्योभिषिञ्चति । यद्विनैन्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्याः प्रतिष्ठितास्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योभिषिञ्चति ॥ १५ ॥ आश्वत्थम्भवति तेन वैश्योभिषिञ्चति । स यदेवादोश्वत्थे तिष्ठत इन्द्रो

मरुत उपमन्त्रयते तस्मादाश्वत्थेन वैश्योभिषिञ्चति यद्वेवकल्पां जुहोति प्राणा वै कल्पा अमृतमु वै प्राणा अमृतेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ सर्वेषां वा देवा ( वेदा ) ७ रसो यत्साम सर्वेषामेवैनदद्वेदाना ७ रसेनाभिषिञ्चति ॥ १७ ॥ अमृताऽभिषेकोऽस्तु ॥ ॐ शान्तिः शान्तिः शान्तिः सुशान्तिर्भवतु ॥ इत्यमृताऽभिषेकः ॥ ततो यजमानः पत्नीं स्वस्य दक्षिणतः पुनरुपवेश्य हस्ते दक्षिणादिकमादाय--ॐ अद्य अभिषेककर्तृभ्यो ब्राह्मणेभ्यो यथाशक्ति दक्षिणां यथाभागं विभज्याहं सम्प्रददे । इति ब्राह्मणेभ्यो दक्षिणां दत्त्वा प्रणम्य ब्रूयात्-भो ब्राह्मणाः पुण्याहवाचनफलसमृद्धिरस्तु इति भवन्तो ब्रुवन्तु । द्विजाः–ॐ पुण्याहवाचनफल समृद्धिरस्तु । इति ब्रूयुः ॥

अथ नीराजनकर्म--तत्र पतिपुत्रवतीभिः सुवासिनीभिर्ब्राह्मणोक्तमन्त्रैर्नीराजनं कार्यम् । मन्त्राः— ॐ अनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदा ꣳ पुत्रवतीदक्षिणत ऽ इन्द्रस्याधिपत्येप्प्रजाम्मेदा ꣳ । सुखदापश्श्चाद्देवस्यसवितुराधिपत्येचक्षुर्म्मेदाऽआ-

हित सम्बोधनान्त, जैसे वेदमणिशर्म्मन्, शत्रुघ्नवर्मन्, लक्ष्मीधर गुप्तआदि जो हों ब्राह्मणलोग कहते जावें ॥ और अभिषेकके समय पत्नीको यजमान अपने वामभागमें बैठावे । यह अमृताभिषेक पूरा हुआ ॥ यजमान अपने पत्नीको फिर अपने दहिने बैठाल, अभिषेक करनेवाले ब्राह्मणोंको देनेके लिये कुश और दक्षिणा हाथमें ले ' ॐ अद्य० ' से ' संप्रददे ' पर्यन्त कह यथाभाग सबको बाट देवे ॥ और हाथ जोड ब्राह्मणोंसे ' ॐ भो ब्राह्मणाः०' से ' समृद्धिरस्तु ' पर्यन्त कहे, ब्राह्मणलोगभी ' ॐ पुण्याह० ' से ' समृद्धिरस्तु पर्यन्त कहदेवें ॥

तदनन्तर नीराजनकर्म–इस प्रकार करे कि, पतिपुत्रवाली सौभाग्यवती ब्राह्मणकी चार स्त्रियां संस्कार्यसहित सपत्नीक यजमानकी आरती करें । और

श्श्रुतिरुत्तरतोधातुर् धिपत्यरोयस्प्पोऽम्मेदा ॥ । विधृतिरुपरिष्टद्बृह
स्प्पतेराधिपत्यऽओजोमेदा विश्श्वोभ्यो मानाष्ट्राभ्यस्प्पाहमनोर-
श्श्वासि ॥ ( य० अ० ३७ मं० १२ ) ततः पुण्याहवाचनं आवाहितान्
गणपत्यादिसर्वान् देवान् विसृजेत् । हस्ते अक्षतानादाय–ॐ अत्र
पुण्याहवाचनकर्मण्यावाहिताः सर्वे देवाः पूजां गृहीत्वा सन्तुष्टाः सन्तः
स्वस्थानं गच्छन्तु । इत्यक्षतान् प्रक्षिप्य, पुनर्हस्ते जलमादाय–ॐ
अनेन विवाहाङ्गभूतपुण्याहवाचनेन कर्मणा कर्माङ्गदेवता प्रजापतिः
प्रीयतां न मम ॥ इति ॥ ततोऽद्यैव द्वितीयदिने वा मातॄणां पूजनं
कुर्यात् ॥

इति श्रीचिकित्सकचूडामणिपं० ठाकुरप्रसादमणित्रिपाठि-
विरचितविवाहसोपाङ्गविधौ पुण्याहवाचनप्रयोगः ॥

---

## अथ मातृकापूजनम् ।

तत्रादौ मातृकापूजने किञ्चिद्विचारो लिख्यते—

तत्र शातातपः—अकृत्वा मातृकायागं यः श्राद्धं परिवेषयेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

अपरार्के—ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।
वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन् ॥

'अनाधृष्टा०' आदि मन्त्र ब्राह्मण पढदेवे । तब यजमान हाथमें अक्षतोंको ले जिन गणपत्यादि देवताओंका आवाहन पुण्याहवाचनकर्महीके लिये किया हो 'ॐ अत्र पुण्याह०' से 'गच्छन्तु' पर्यन्त कह उन सभोंपर अक्षत छोड विसर्जन करदेवे । यह कर्म करके आजही अथवा दूसरे दिन मातृका पूजन करे ॥ इति पुण्याहवाचनकर्मप्रयोगः ॥

प्रथम यहां मातृकापूजनका कुछ विचार लिखते हैं । इस विषयमें शातातपने कहा है कि, मातृकाओंका पूजन बिना किये जो आभ्युदयिक श्राद्ध करता है, तो मातृकायें क्रोधित हों उस कर्मकर्ताको मारना चाहती हैं ॥ और अपरार्कमें कहा है कि, वृद्धिकर्मोंमें ब्रह्माणी आदि सप्त मातृका

ब्रह्मपुराण उक्तम्–गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ १ ॥
कुड्यलग्ना वसोर्धाराः पञ्चधारा घृतेन तु ।
कारयेत्सप्त वा धारा नातिनीचा न चोच्छ्रिताः ॥
गौरी १ पद्मा २ शची ३ मेधा ४ सावित्री ५ विजया ६ जया ७ ।
देवसेना ८ स्वधा ९ स्वाहा १० मातरो लोकमातरः ॥
धृतिः ११ पुष्टि १२ स्तथा तुष्टि १३ रात्मनः कुलदेवता १४ ।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥

इत्युक्तविधानमनुसृत्य मातरो लोकमातर इत्येते द्वे पदे गौर्यादीनां विशेषणस्वरूपे मत्वा क्वचित्प्रयोगे गणेशेनाधिकानां गौर्यादिचतुर्दशमातृकाणामेव पूजनं लिखितमस्ति । किन्तु प्रयोगरत्नाद्यनेकग्रन्थेषु तथैव सर्वदेशप्रचलितेष्वखिलकर्मकाण्डप्रयोगेष्वपि तथा दुर्गा, क्षेत्रपाल और गणाधिपोंका पूजन पहिले करके, तत्पश्चात् नान्दी मुख पितरोंका श्राद्ध करना चाहिये ॥ ब्रह्मपुराणमें इस प्रकार कहा है कि, कई संस्कार एक साथ करनेकी दशामें गणेशपूजन, स्वस्तिपुण्याहवाचन, शान्तिपाठ तथा मातृकापूजन नान्दीश्राद्धादि कर्म सबके आदिमें एक ही वार करे, हर एकके आदिमें पृथक् २ नहीं करे । शुद्ध लिपीहुई भित्तिपर पांच वा सात धारा घृतकी करे, जो बहुत ऊंची या बहुत नीची नहीं हों, किन्तु मझोली और बीचमें हों । गौरी १, पद्मा २, शची ३, मेधा ४, सावित्री ५, विजया ६, जया ७, देवसेना ८, स्वधा ९, स्वाहा १०, धृति ११, पुष्टि १२, तुष्टि १३ और आत्मकुल देवता १४ गणेश करके सहित इन चौदह मातृकाओंका पूजन सभी वृद्धिकर्मोंमें करना चाहिये । इस ऊपर कहे विधानके अनुसार "मातरः" "लोकमातरः" इन दोनों पदोंको गौर्यादिका विशेषण मानकर किसी किसी प्रयोगमें गणेशको अधिक करके गौर्यादिकी संख्या चौदह कहकर मातृकाओंकी पूजा लिखी है । किन्तु प्रयोग रत्न आदि अनेक ग्रन्थोंमें, और सभी देशोंके प्रचलित समस्त कार्मकाण्ड प्रयोगोंमेंभी

१ गणशः क्रियमाणानां कोऽर्थः ? अनेकसंस्कारकर्मणामेकदैव क्रियमाणानामित्यर्थः । मातृभ्य इति षष्ठ्यर्थे चतुर्थी ।

गौर्यादिमातृकापूजने "गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश" इति गौर्यादिमातृकाः षोडशसंख्याका लिखिताः सन्ति । अत्र मातरो लोकमातर इति द्वे पदे गौर्यादिविशेषणरूपे न स्तः । वस्तुतस्तु गौर्यादिषोडशसंख्यापूरणाय मातरो लोकमातर इत्यनयोः पृथगङ्गीकारः कृतः, स एव समुचितश्च । यतः गौर्यादिषोडशमातृकानाम एव सर्वत्र प्रसिद्धम् । तथा एताभिस्सहैवाऽन्यासामपि घृततृणतोरणमण्डपादिबहुविधमातृकाणामेवं नवग्रहादीनाञ्च पूजनं सर्वत्रैव लिखितमस्ति । एवं मातृकापूजने द्वौ प्रकारौ दृश्येते । तत्र द्वितीयः प्रकारः बहुसंमत्वात् विशेषप्रतिष्ठितो भाति इति निश्चित्य बहुसंमतः सर्वत्र प्रचलितप्रसिद्धविधानानुसारेण स एवात्र प्रयोगो लिखितः ॥ इति मातृकापूजने विचारः॥

अथ मातृकापूजनप्रयोगः—तत्र यजमानः स्वासने प्राङ्मुख उपविश्य स्वस्य दक्षिणतः पत्नीं संस्कार्यपुत्रं कन्यां वा क्रमेण चोपवेश्य आचम्य

गौर्यादि मातृकाओंके पूजन विषयमें 'वृद्धौ पूज्याश्चषोडश' इत्यादि वाक्य अर्थात् वृद्धिकर्मोंमें गौर्यादि षोडश मातृकाओंका पूजन करना चाहिये, ऐसा लिखा है । यहां "मातरः" और "लोकमातरः" ये दोनों पद गौर्यादिके विशेषण नहीं मानो बल्कि अलग अलग ये दो प्रकारकी मातृकायें हैं कि, जिनसे गौर्यादि मातृकाओंकी संख्या सोलह पूरी होती है । और ऐसा ही मानना उचित भी है । क्योंकि गौर्यादिका "षोडशमातृका" ऐसा ही नाम सर्वत्र प्रसिद्ध है, तथा इनही षोडशमातृकाओंके साथ और भी घृत, तृण, तोरण, मण्डपादि बहुविधि मातृकाओंके, एवं नवग्रहादिकोंके पूजन भी सर्वत्र लिखे हैं । मातृकापूजनमें ऊपर लिखे चौदह गौर्यादिकी संख्या और सोलह, दो प्रकार देखा जाता है, इनमें षोडशका प्रकार बहुसंमत होनेसे विशेष प्रतिष्ठित मालूम होता है । ऐसा ही निश्चित कर जो बहुसंमत और सर्वत्र प्रचलित तथा प्रसिद्ध विधान है, उसीके अनुसार यहां प्रयोग लिखा है ॥ इति मातृकापूजने विचारः ॥

कुशयवजलान्यादाय[1]—ॐ अद्य पूर्व्वोच्चरितशुभपुण्यतिथौ मम कन्यायाः पुत्रस्य वा श्वःअद्य वा कर्तव्यविवाहङ्गतया समस्तमातृकाणां यथास्थाने पूजनमहं करिष्ये । इति जलं भूमौ प्रक्षिप्य पुनर्हस्तेनाक्षतान्प्रक्षिपन् स्थलमातृकादीनामावाहनं कुर्यात् यथामूलेऽत्र सप्तानामप्येकतन्त्रेण ब्राह्मयादिस्थलमातृकाणामावाहनादि लिखितम्, तथैव बहवो जनाः कुर्वन्ति । केचिद्विशेषश्रद्धावन्तः टिप्पण्यां लिखितप्रकारेण सर्वासां पृथक् नामभिरावाहनादिकं कुर्वन्ति । एवमेवाऽग्रेऽपि

मातृका पूजन प्रयोग यजमान पूर्वाऽभिमुख अपने दाहिने पत्नी और संस्कार्य पुत्र वा कन्याको क्रमसे बैठालकर, आचमन तथा प्राणायाम करके हाथमें कुश जलादि ले ॐअद्य०' इत्यादि कहताहुआ कन्याका पिता कन्याका नाम, वा पुत्रका पिता हो तो पुत्रका नाम, एवं जिस दिन विवाह होनेवाला हो, जैसे दूसरे दिन या आजही इत्यादि जो हो मूलमें कहे वाक्योंके अनुसार कह संकल्प पूरा करके जल छोडदेवे । फिर जिस स्थानपर जिसका नाम आगे कहेंगे उसी स्थानपर हाथसे अक्षत छिडकता हुआ स्थलमातृका आदि सभों का आवाहन करे । ब्राह्मयादि सातों स्थल मातृकाका आवाहन, यहां मूलमें एक तन्त्रही करके जैसा लिखा है, बहुधा ऐसा ही संक्षेपमें बहुत लोग आवाहनादि करते हैं । और जो कोई विशेष श्रद्धावान् हर एक नामोंसे अलग २ पूजन करना चाहें, वे टिप्पणीमें लिखे अनुसार सभोंका पृथक्

---

१—यदि पूर्वदिन एव पुण्याहवाचनान्तं कर्म कृतं चेत्तदा द्वितीयदिने मातृकापूजनारम्भात् प्रागेव मण्डपे पूर्वस्थापितानां गणेशादिदेवानां यथोपस्थितोपचारैः—ओं अत्र पूर्वस्थ 'एतेभ्यो गणेशादिसर्वदेवेभ्योनमः । इति मंत्रेण पूजनं कृत्वा ततो मातृकापूजनादि, देवपितृ निमंत्रणं तथा आभ्युदयिक श्राद्धं च कर्तव्यमिति ।। यदि मातृकापूजन करनेके दिनसे पहिलेही किसी दिनोंमें गणेशादि पूजनपूर्वक पुण्याहवाचनान्त कर्म कर चुके हों, और उससे दूसरे दिन मातृकापूजनादि कर्म करना हो तो महागणपत्यादि जो पहिले हीसे मण्डपमें स्थापित देवता हैं, उन सभोंका टिप्पणीमें लिखे ' ओं अत्र० ' इत्यादि नाम मन्त्र कह सर्व उपचारोंसे पूजन करके फिर मातृकापूजन तथा देव' पितृ निमन्त्रण और आभ्युदयिकश्राद्ध करना चाहिये ॥

वक्ष्यमाणासु समस्तमातृकासु मूलोक्तरीत्या टिप्पण्युक्तप्रकारेण वा आवाहनादिव्यवस्था विज्ञेया ॥ इति ॥ मण्डपस्थले ब्राह्म्यादिस्थलेमातृकाः सप्त आवाहयेत् । ॐ ब्राह्म्यादिसप्तस्थलमातृकाभ्यो नमः । ब्राह्म्यादिसप्तस्थलमातृकाः मण्डपस्थले आवाहयामि स्थापयामि । एवं मण्डपे—नन्दिन्यादिमण्डपमातृकाः पञ्च । मण्डपस्याग्निकोणे ॐ नन्दिन्यै नमः नन्दिनीं आवा० स्था० १ । मण्डपस्य निर्ऋतिकोणे ॐ नलिन्यै नमः नलिनीम् आवा० स्थाप० २ । मण्डपस्य वायव्यकोणे ॐ मैत्रायै नमः मैत्राम् आवा० स्थाप० ३ । मण्डपस्येशानकोणे ॐ उमायै नमः उमाम् आवा० स्थाप० ४ । मण्डपस्य मध्यमभूमौ ॐ पशुवर्द्धिन्यै नमः पशुवर्द्धिनीम् आवा० स्थाप० ५ । तत्रस्तृणनिर्मितासु मृत्प्रलेपितमध्यप्रदेशासु पञ्चपिञ्जुलिकासु मध्ये द्वयोः पिञ्जुलिकयोर्मृत्म-

नामोंसे आवाहनादि करें । ऐसेही आगेभी कही हुई समस्त मातृकाओंके पूजनादिकी व्यवस्था, मूल या टिप्पणीमें कहे अनुसार जानना ॥ मण्डपस्थलपर ब्राह्म्यादि सात स्थलमातृकाको एकतन्त्रमें 'ॐ ब्राह्म्यादि०' से 'स्थापयामि' पर्यन्त कह अक्षत छोड आवाहन करे । आगे ऐसेही अक्षत छोडकर सर्वत्र आवाहन करना । मण्डपके अग्निकोणसे चारों कोण और मध्यस्तम्भके समीपही 'ॐ नन्दिन्यै०' आदि पांच मण्डपमातृकाके नाम कह पांचों स्थानोंमें क्रमसे आवाहन कर देवे । तृणमातृका सातोंका पूजन इस

१ स्थलमातृकाः सप्त—ओं ब्राह्म्यै नमः ब्राह्मीम् आवाहयामि स्थापयामि १ । (एवं सर्वत्र) ओं माहेश्वर्यै नमः माहेश्वरीम् आ० स्था० २ । ओं कौमार्यै नमः कौमारीम् आ० स्था० ३ । ओं वैष्णव्यै नमः वैष्णवीम् आवाहयामि स्था० ४ । वाराह्यै नमः वाराहीम् आ० स्था० ५ । ओं माहेन्द्र्यै नमः माहेन्द्रीम् आ० स्था० ६ । ओं चामुण्डायै नमः चामुण्डाम् आ० स्था० ७ ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डाः स्थलमातरः ॥ १ ॥

२ मण्डपमातृकाः पञ्च—नन्दिनी नलिनी मैत्रा उमा च पशुवर्द्धिनी ।
आग्नेयादिक्रमेणैताः पञ्च मण्डपमातरः ॥ २ ॥

लेपितस्थले गोमयेन द्वे द्वे पिण्डिके त्रयाणाञ्च मृत्प्रलेपितस्थले एकैका इति सप्तपिण्डिकाः निर्माय एकैकस्यां पिण्डिकायाम् एकामेकाम् इति। तृणमातृकाः सप्त आवाहयेत्—यथा प्रथमपिञ्जुलिकायाम् ॐ वासिष्ठ्यै नमः वासिष्ठीम् आ० स्था० १। ॐ नन्दिन्यै नमः नन्दिनीम् आवा० स्थाप० २। द्वितीयपिञ्जुलिकायाम् ॐ नन्दायै नमः नन्दाम् आवा० स्था० ३। ॐ वसुदेवायै नमः वसुदेवाम् आ० स्था० ४। तृतीयपिञ्जुलिकायाम्—ॐ भार्गव्यै नमः भार्गवीम् आवा० स्थाप ५। चतुर्थपिञ्जुलिकायाम्—ॐ जयायै नमः जयाम् आवा० स्थाप० ६। पञ्चमपिञ्जुलिकायाम्—ॐ विजयायै नमः विजयाम् आवा० स्था० ॥ ७ ॥ आम्रादिपल्लवनिर्मिततोरणेषु तोरणमातृके द्वे आवाहयेत्-ॐ धात्र्यै नमः, धात्रीम् आ० स्था० १। ॐ विधात्र्यै नमः विधात्रीम् आ० स्था० ॥ २ ॥ इत्यावाह्य। पुनरक्षतान् गृहीत्वा ॐ मनोजूतिर्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳫं समिमन्दधातु। विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥

प्रकार करना कि, तृणोंकी पिंजुर्नासे तिकोनी तिपखी (Λ) पांच बनावे, उन पांचोंके बीच बीचमें जलसे सनी हुई मट्टीका प्रलेपन कर उस मट्टी लिपे स्थानपर गोमयकी बनाई पिण्डिका (❋) इस क्रमसे चिपकावे कि पहिली और दूसरी दो दो और बाकी तीनपर एक एक, ऐसी कुल सात पिण्डिकाओंको पांच तिपखियोंपर लगाय, हर एक पिण्डिकापर क्रमसे 'ॐ वासिष्ठ्यै' आदि सात नामोंसे आवाहन करे। दोका आम्रपल्लवादिसे बने बन्धनवारोंपर 'ॐ धात्र्यै०' आदिसे दो नामोंसे आवाहन करके फिर अक्षत ले 'ॐ मनोजूति' स 'सुप्रतिष्ठिता भवत' पर्यन्त कह ब्राह्म्यादि

(१) तृणमातृकाः सप्त—वासिष्ठी नन्दिनी नन्दा वसुदेवा च भार्गवी च
जया च विजया चैव सप्तैतास्तृणमातरः ॥

(२) तोरणमातृके द्वे-धात्रीविधात्र्यौ द्वे चैव पूज्ये तोरणमातृके ॥

( य० अ० २ मं० १३ ) ॥ ब्राह्म्यादिसमस्तावाहिता मातरः सुप्रतिष्ठिता भवत ॥ इति प्रतिष्ठाप्य ॐ ब्राह्म्यादिसप्तस्थलमातृकाभ्यो नमः १। ॐ नन्दिन्यादिपञ्चमण्डपमातृकाभ्यो नमः २। ॐ वासिष्ठ्यादिसप्ततृणमातृकाभ्यो नमः ३। ॐ धातृविधातृतोरणमातृकाभ्यां नमः ४॥ एतैश्चतुर्थ्यन्तनाममन्त्रैः पृथक् पृथक् एकतन्त्रेण वा सर्वोपचारैः सर्वाः पूजयेत्। ( समस्तमातृकानैवेद्यार्थं यदपूपादिकं मण्डपे कृत्वा पूर्वत एव सुरक्षितम्, तस्मादेव किञ्चिदेताभ्योऽपि निवेदयेत ) ततो हस्ते जलमादाय ॐ अनया पूजया अत्रावाहिताः ब्राह्म्यादिसमस्तमातरः प्रीयन्तां न मम। इति जलमुत्सृज्य प्रार्थयेत्—भो अत्रावाहिताः ब्राह्म्यादिसमस्तमातरः मम सकुटुंबस्य आयुष्कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः शुभदात्र्यः वरदात्र्यो भवत ॥ एवं पूजयित्वा तृणमातृकायाः पञ्चपिंजुलीः पञ्चसु मण्डपस्तम्भेषु पृथक् पृथक् बध्नीयात्। तथा पल्लवनिर्मितानि तोरणान्यपि मण्डपे गृहद्वारादौ च बध्नीयात ॥ अथ द्वारमातृकाणां सप्तानां पञ्चानां वा पूजनं कुर्यात्।

स्थलमातृकासे तोरणमातृ पर्यन्त चारों स्थानोंपर अक्षत छोड देवे। और इन चारों प्रकारकी मातृकाओंका ' ॐ ब्राह्म्या० ' इत्यादिमूलमें लिखे चतुर्थ्यन्त चार नाममन्त्रोंसे अलग २ अथवा एकतन्त्रहीमें सर्वोपचारसे सबोंकी पूजा करे। और समस्त मातृओंके नैवेद्यार्थ जो पुआ आदि मण्डपमें बनाकर पहिलेहीसे सुरक्षित किया है, उसीमेंसे कुछ नैवेद्य इन सभोंको निवेदन करे। फिर हाथमें जल ले 'ॐ अनया०' से 'न मम' पर्यन्त कह जल छोडकर, फिर हाथ जोड 'भो अत्रावाहिता०' से 'वरदात्र्यो भवत' पर्यन्त कर प्रार्थना कर देवे। इस प्रकार इन सभोंकी पूजा कर, तृणमातृकाओंकी पांचों पिंजुलियोंमेंसे एक एकको मण्डपके हरएक खंभोंमें अग्निकोण क्रमसे पांचोंको बांधदेना और मण्डपके चारों तरफ तथा गृहद्वारादि स्थानोंमें बन्धनवारोंको

तद्यथा—विवाहगृहद्वारस्योभयतः पार्श्वे भित्तौ रक्तपीतादिरागैर्विचित्रित-पीठमध्ये दक्षिणे तिस्रः वामे चतस्रः इति सप्त, अथवा दक्षिणे द्वे, वामे तिस्रः इति पञ्चैव गोमयपिण्डकाः धृत्वा तासां सप्तानां पञ्चानां वा मध्ये एकैकस्याम् एकामेकां वक्ष्यमाणनाममन्त्रैरावाहयेत् ॥ द्वार-मातृकाः सप्तपक्षे, पञ्च पक्षे तु टिप्पण्यां नामानि द्रष्टव्यानि । संस्का-र्यसन्तानेन सहितः सपत्नीको यजमानः पूजनसामग्री गृहीत्वा निर्मित-द्वारमातृकासमीपं गत्वा तत्र आचम्य हस्ते कुशजलान्यादाय ॐ अद्य शुभपुण्यतिथौ मम कन्यायाःपुत्रस्य वा विवाहाङ्गभूतद्वारमातृकाणां पूजनमहं करिष्ये इति संकल्प्य जलं भूमौ क्षिपेत्।ततोऽक्षतान् प्रक्षिपन्

बांध देना । तत्र द्वारमातृका सात अथवा पांचके पूजनार्थ, जिस गृहमें विवाह कृत्य हो उस गृहद्वारके दाहिने और बायें दोनों बगलकी भित्तीपर रक्त पीतादि रङ्गोंसे छोटा तथा चौखूँटा एक एक विचित्र पीठ बनाय उसके बीच में दक्षिणतरफ तीन और बाँयेंतरफ चार, ऐसी सात गोमयकी बनी हुई पिण्डिकायें चिपका देवे । अथवा दक्षिणमें दो और बांयेंमें तीन ऐसी पांच ही पिण्डिका लगा देवे और इन सातों या पांचों पिण्डिकाओंमेंसे एक एक पर क्रमसे एक ही एक मातृकाका आवाहन आगे लिखे नाम मन्त्रोंसे करे । द्वारमातृका सात होनेसे मूलमें लिखे अनुसार और पांच होनेसे टिप्पणीमें नाम लिख देखना । संस्कार्य संतानके साथ सपत्नीक यजमान, पूजनसामग्रीसहित ऊपर कहे अनुसार बनीहुई द्वारमातृकाके समीप जाय आचमन कर हाथमें कुशजल ले 'ॐ अद्य०' इत्यादिमें कन्या या पुत्र जो हो उसीका नाम कहते हुये संकल्पमें कहे सभी शब्दोंको 'करिष्ये' पर्यन्त पूरा कह जल छोड देवे । फिर हर एक नामसे अक्षत छोडताहुआ द्वारके दक्षिण पीठपर

१ सप्तद्वारमातृकाः—लक्ष्मी सरस्वती चैव गङ्गा च यमुना तथा । काली कपालिनी रौद्री सप्तैता द्वारमातरः ॥ २ पंचद्वारमातृकाः—जयन्ती विजया नामा शोभना पिङ्गला तथा । भद्रकाली प्रपूज्या वै पञ्चैता द्वारमातरः ॥

द्वारदक्षिणे ( ३ )—ॐ लक्ष्म्यै नमः लक्ष्मीम् आवा० स्थाप० १। ॐ सरस्वत्यै नमः सरस्वतीम् आवा० स्थाप० २। ॐ गङ्गायै नमः गङ्गाम् आवा० स्थाप० ३ ॥ द्वारवामे ( ४ ) ॐ यमुनायै नमः यमुनाम् आ० स्था० ४। ॐ काल्यै नमः कालीम् आवा० स्थाप० ५। ॐ कपाल्यै नमः कपालिनीम् आवा० स्थाप० ६। ॐ रौद्र्यै नमः रौद्रीम् आवा० स्थाप० ७ ॥ पुनरक्षतान् गृहीत्वा ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु। विश्वेदेवासऽइहमादयन्तामो३ प्रतिष्ठ। ( य० अ० २ मंत्र० १३ ) ॐ लक्ष्म्यादिसप्तद्वारमातृकाः इहागच्छत इह तिष्ठत इत्यक्षतान् क्षिप्त्वा प्रतिष्ठाप्य सर्वोपचारैः संपूजयेत्। अत्रापि नैवेद्यं पूर्ववत्। ततः स्वाचारतो यजमानपत्नी पतिशिखासंमिलितेन स्वकुन्तलेन तासामुपरिभित्तौ संलग्ना घृतेन दक्षिणे द्वे वामे तिस्रः नातिलम्बा नातिह्रस्वाः धाराः पत्या ब्राह्मणेन वा पठितेन वसोः पवित्रेति मन्त्रेण पातयेत्। ॐ व्वसोःपवित्रमसि शतधारंव्वसोःपवित्रमसिसहस्रधारम्। देवस्त्वासवितापुनातुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः। ( य० अ० १ मं० ३ ) ततो यजमानः

'ॐ लक्ष्म्यै०' इत्यादि ३ बायें पीठपर 'ॐ यमुनायै०' इत्यादि ४ का आवाहन करके फिर अक्षत ले 'ॐ मनो' से 'तिष्ठत' पर्यन्त अक्षत छोड सभोंकी प्रतिष्ठा करे और सर्वोपचारसे सभोंकी पूजा करे। यहांभी नैवेद्य पूर्वमातृकावत् रखना। और अपने कुलाचारके अनुसार यजमान पत्नी, अपने केशोंकी एक चोटीके अग्रभागमें, अपने पतिके शिखाका अग्रभाग मिलाकर, इन मिले हुये दोनोंके नोकोंको द्वारमातृकाकी पिण्डिकाओंसे ऊपर दीवारमें लगाती है और उसी चोटीके अग्रभाग परसे दीवारमें स्पर्शित कर 'ॐ वसोः०' इत्यादि मन्त्र पढता हुआ, पति अथवा ब्राह्मण घृतकी धारा ऐसा ढारता है कि' जिससे दीवारपर घृतकी रेखा मझोली बन जावे। ऐसी घृत

हस्ते जलमादाय—अनया पूजया लक्ष्म्यादिसप्त मातरः प्रीयन्तां न मम । इति जलमुत्सृज्य प्रार्थयेत्—भो द्वारमातरः मम सकुटुम्बस्यायुष्कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यस्तुष्टिकर्त्र्यः शुभदात्र्यो भवत । इति ॥

अथ विवाहकर्मणि षोडशमातृकादीनां स्थाननिर्माणविधिः—पूजनावसरे सम्मुखशुक्रादिदोषरहिते कुत्रापि गृहाऽऽभ्यन्तरशुभस्थाने भित्तिकायां गोमयेन गैरिकादिना वा यथोचितचतुरस्रप्रलिप्तायां रक्तपीतादिरागैर्विचित्रितायां मध्यस्थाने सप्तदशसंख्यका गोमयनिर्मिताः पिण्डिकाः कार्याः । तत्र प्रथमपिण्डिकायां गणपतिं तदवशिष्टषोडशपिण्डिकासु क्रमेण गौर्यादिषोडशमातृकाश्चावाहयेत् ॥

अथ गौर्यादिमातृकापूजनप्रयोगः—यजमानः द्वारमातृकापूजनं विधायानन्तरं पूर्वनिर्मितषोडशमातृकास्थानं गतः तत्रासधारा द्वारके दक्षिण बगलकी मातृकापीठ पर दो और बायें बगलकी मातृका पीठपर तीन, हर एक रेखा करनेमें मन्त्र पढना चाहिये । फिर यजमान हाथमें जल ले ' अनया० ' से ' न मम ' पर्यन्त कह जल छोडे और हाथ जोड और ' भो द्वारमातरः ' इत्यादि ' भवत ' पर्यन्त कह देवे ॥

विवाहकर्ममें षोडशमातृकादि पूजनार्थ स्थान—पहिलेहीसे इस प्रकार बनाय रखना कि, गृहके किसी स्थानके ऐसी दीवारमें जहां पूजन करते समय सम्मुख शुक्रादिका दोष नहीं हो, आवश्यकतानुसार गोमय अथवा गेरू आदिसे दीवारको चौकोना लीप, उसपर लाल पीले आदि माङ्गलिक रंगोंसे विचित्र स्थान बनाय उसीपर द्वारमातृकाके समान बनाईहुई सत्रह गोमय पिण्डिकाओंको क्रमसे चिपका देवे । और इन दीवारमें लगीहुई सत्रह पिण्डिकाओंमेंसे पहिलीपर गणेश और बाकी सोलहोंपर क्रमसे गौर्यादि सोलह मातृकाओंका आवाहन करे । इति ॥

गौर्यादिमातृकापूजनप्रयोग—यजमान द्वारमातृकापूजन करके तब षोडश

नोपरि स्वयमुपविश्य दक्षिणतः ग्रन्थिबन्धनयुतां पत्नीम् तथा संस्कार्थ-पुत्र कन्यां वा उपवेश्य आचम्य कुशजलान्यादाय ॐ अद्य पूर्वोच्च-रितशुभपुण्यतिथौ मम कन्यायाः पुत्रस्य वा विवाहाङ्गभूतगणपतिसहि-तानां गौर्यादिषोडशमातृकादीनामावाहनपूजनादिकर्माऽहं करिष्ये । इति संकल्प्य हस्तेऽक्षतान् गृहीत्वा आवाहयेत् ॥ तत्रादौ गणेशसहिताः षोडशमातृकाः[1] ॐ गणेशाय नमः गणेशम् आवा० स्था० १ । ॐ गौर्यै नमः गौरीम् आवा० स्थाप० २ । ॐ पद्मायै नमः पद्माम् आवा० स्था० ३ । ॐ शच्यै नमः शचीम् आवा० स्थाप० ४ । ॐ मेधायै नमः मेधाम् आ० स्था० ५ । ॐ सावित्र्यै नमः सावित्रीम् आ० स्था० ६ । ॐ विजयायै नमः विजयाम् आ० स्था० ७ । ॐ जयायै नमः जयाम् आवा० स्था० ८ । ॐ देवसेनायै नमः देवसेनां आ० स्था० ९ । ॐ स्वधायै नमः स्वधाम् आवा० स्था० १० । ॐ स्वाहायै नमः स्वाहाम् आ० स्था० ११ । ॐ मातृभ्यो नमः मातृः आवा० स्था० १२ । ॐ लोकमातृभ्यो नमः लोकमातृः आवा० स्था० १३ । ॐ धृत्यै नमः धृतिम् आ० स्था० १४ । ॐ पुष्ट्यै नमः पुष्टिम् आवा० स्थाप० १५ । ॐ तुष्ट्यै नमः तुष्टिम् आवा० स्था० १६ । ॐ कुलदेवतायै नमः कुलदेवताम् आवा० स्था० ॥ १७ ॥

मातृकाके स्थानपर जाकर वहां आसनपर बैठे । अपने दहिने ग्रन्थिबन्धन करीहुई पत्नी और उसके दाहिने संस्कार्य सन्तानको भी बैठाल आचमन करे, हाथमें कुशजल ले 'ॐ अद्य०' से अहं करिष्ये' पर्यन्त कहकर जल छोड देवे । तब आगे कहे हर एक नामोंसे अक्षत छोडते हुए १७ पिण्डि-काओंपर क्रमसे गणेशसहित षोडश मातृकाओंका 'ॐ गणेशाय नमः' यहांसे 'कुलदेवताम् आ० स्था०' पर्यन्त १७ का आवाहन करके फिर हाथमें

(१) गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृति पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश ॥

इत्यावाह्य पुनरक्षतान् गृहीत्वा ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञᳬसमिमन्दधातु । विश्वेदेवासऽइहमादयन्तामोंऽम्प्रतिष्ठ ( य० अ० २ मं० १३ ) ॐ गणपतिसहिताः षोडशमातरः इहागच्छत इह तिष्ठत । इत्यक्षतान् प्रक्षिप्य ॐ गणपतिसहिताभ्यो गौर्यादिषोडशमातृकाभ्यो नमः । इति मंत्रेण सर्वोपचारैः पूजयेत् । अत्रापि नैवेद्यं पूर्ववत् । ततो हस्ते जलं गृहीत्वा अनया पूजया गणपतिसहिता गौर्यादिषोडशमातरः प्रीयन्तां न मम । इति भूमौ जलं प्रक्षिप्य प्रार्थयेत्–

कुर्वन्तु मातरस्सर्वा गौर्याद्या मम मङ्गलम् ।
लक्ष्मीं तन्वन्तु मद्गेहे शुभकार्याणि सर्वदा ॥ इति ॥

ततः स्वाचारतो यजमानपत्नी पतिशिखासम्मिलितेन स्वकुन्तलेन तासामुपरि भित्तौ संलग्ना घृतेनोत्तरोत्तरक्रमेण नातिनीचा न चोच्छ्रिताः सप्त पञ्च वा धाराः पत्या ब्राह्मणेन वा पठितेन वसोः पवित्रेति मंत्रेण पातयेत् । ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण

अक्षत ले 'ॐ मनो' से 'इह तिष्ठत' पर्यन्त कह सभोंपर अक्षत छोडकर 'ॐ गणपतिसहिताभ्यो०' इत्यादि नाममन्त्रसे सभोंका पूजन सर्वोपचारसे करदेवे । ( मातृकाका नैवेद्य यहां भी पूर्ववत ) फिर हाथमें जल ले 'अनया०' से 'न मम' पर्यन्त कह जल छोडे । फिर हाथ जोड 'कुर्वन्तु' श्लोकसे प्रार्थना करे । अपने कुलाचारके अनुसार यहां भी द्वारमातृकाके समान यजमानपत्नी अपने केशोंकी एक चोटीके अग्रभागमें अपने पतिकी शिखाका अग्रभाग मिलाकर इन मिले हुये दोनोंके नोकोंको षोडशमातृकाकी पिण्डिकाओंसे ऊपर दीवारमें लगाती है और दीवारमें लगी हुई उसी चोटीके अग्रभाग पर पति अथवा कोई ब्राह्मण 'ॐवसोः०' इत्यादि मंत्रसे घृतकी धारा ऐसी ढारता है कि, जिससे दीवारपर घृतकी मझोली रेखा

शतधारेणसुप्वाकामधुक्षत (य० अ० १ मं० ३ ) ॥ इति ॥ तथात्रैव सप्तदशपिण्डिकासमीपस्थाने अन्यासां घृतमातृकादीनामप्यावाहनं कृत्वा श्रद्धालवो जनाः पूजनं कुर्वन्ति । तथैवात्र प्रयोगः । अक्षतान् प्रक्षिपन् सर्वासामावाहनं कुर्यात् । तत्र वसोर्धाराधिष्ठातृकाः—घृतमातृकाः सप्त ॐ श्रियै नमः श्रियम् आवाहयामि स्थापयामि० १ । ॐ लक्ष्म्यै नमः लक्ष्मीम् आ० स्था० २ । ॐ धृत्यै नमः धृतिम् आ० स्था० ३ । ॐ मेधायै नमः मेधाम् आ० स्था० ४ । ॐ पुष्ट्यै नमः पुष्टिम् आ० स्था० ५ । ॐ श्रद्धायै नमः श्रद्धाम् आ० स्था० ६ । ॐ सरस्वत्यै नमः सरस्वतीम् आ० स्था० ७ । ( तत्रैव ) ॐ दुर्गायै नमः दुर्गाम् आ०स्था० १ । ॐ कीर्त्यादिचतुर्दशगृहमातृकाभ्यो नमः कीर्त्यादिच-

उत्तरोत्तर क्रमसें सात या पांच बनजावें । हरएक ऐसी घृतधाराकी रेखा करनेमें मन्त्र पढना । इनही सत्रह पिण्डिकाओंके समीपही दीवालपर घृत-मातृका आदि और भी अनेक मातृकाओंका श्रद्धालुजन आवाहन पूजन करते हैं । अतः वैसाही प्रयोग यहां लिखते हैं । घृतधाराके समीपही दीवाल पर अक्षत छिडकता हुआ आगे लिखे नाममन्त्रोंसे सभी मातृओंका आवाहन करे । सात घृतमातृका 'ॐ श्रियै०' इत्यादि सातका आवाहनकर उसी स्थानपर और भी दुर्गा तथा मूलमें इकट्ठा करके लिखे अथवा टिप्पणीमें

---

१ श्रीर्लक्ष्मीश्च धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती
मांगल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥

२ गृहमातृकाः—कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिस्तथैव च = गृहमातर एतास्तु शुभे पूज्याश्चतुर्दश ॥ ओं कीर्त्यै नमः कीर्तिम् आवाहयामि स्थापयामि १ । ओं लक्ष्म्यै नमः लक्ष्मीम् आ० स्था: २ । ओं धृत्यै नमः धृतिम् आ० स्था० ३ । ओं मेधायै नमः मेधाम् आ० स्था० ४ । ओं पुष्ट्यै नमः पुष्टिम् आ० स्था० ५ । ओं श्रद्धायै नमः श्रद्धाम् आ० स्था० ६ । क्रियायै नमः क्रियाम् आ० स्था० ७ । मत्यै नमः मतिम् आ० स्था० ८ । ओं बुद्ध्यै नमः । बुद्धिम् आ० स्था० ९ । लज्जायै नमः

तुर्दशगृहमातृकाः आ० स्था० ॐ मोदादि षट्अविघ्नमातृकाभ्यो नमः मोदादि षट्अविघ्नमातृकाः आ०स्था० । ॐ मत्स्यादिसप्तजलमातृका-भ्योनमः मत्स्यायादि सप्तजलमातृकाः आ०स्था० । ॐ क्षमादिसप्तआ-भ्यन्तरमातृकाभ्यो नमः क्षमादिसप्तआभ्यन्तरमातृकाः आ० स्था० । इत्यावाह्य पुनरक्षतान् गृहीत्वा ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पति र्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञᳯसमिमन्दधातु । विश्श्वेदेवासऽइहमा-

पृथक् पृथक् नामोंसे चौदह गृहमातृका, अविघ्नमातृका छः, जलमातृका सात, आभ्यन्तरमातृका सात इन सभोंका आवाहन कर फिर हाथमें अक्षत

---

लज्जाम् आ० स्था० १० । ओं वपुर्मातृकायै नमः वपुर्मातृकाम् आ० स्था० ११ । ओं शान्त्यै नमः शान्तिम् आ० स्था० १२ । ओं तुष्ट्यै नमः तुष्टिम् आ० स्था० १३ । कान्त्यै नमः कान्तिम् आ० स्था० १४ ॥

१ षट् अविघ्नमातृकाः-मोदा चैव प्रमोदा च सुमुखा दुर्मुखा तथा ।
अविघ्ना विघ्नहर्त्री च षडेताऽविघ्नमातरः ॥

ओं मोदायै नमः मोदाम् आ० स्था० १ । ओं प्रमोदायै नमः प्रमोदा० आ० स्था० २ । ओं सुमुखायै नमः सुमुखाम् आ० स्था० ३ । ओं दुर्मुखायै नमः दुर्मुखाम् आ० स्था० ४ । ओं अविघ्नायै नमः अविघ्नाम् आ स्था० ५ । ओं विघ्नहर्त्र्यै नमः विघ्नहर्त्रीम् आ० स्था० ६ ।

२ सप्त जलमातृकाः-मत्सी कूर्मी च वाराही माण्डुकी दर्दुरी तथा ।
जलौकी सोमपा चैव सप्तैता जलमातरः ॥

ओं मत्स्यै नमः मत्सीम् आ० स्था० १ । ओं कूर्म्यै नमः कूर्मीम् आ० स्था० २ । वाराह्यै नमः। वाराहीम् आ० स्था० ३ । माण्डुक्यै नमः माण्डुकीम् आ० स्था० ४ । दर्दुर्यै नमः दर्दुरीम आ० स्था० ५ । जलौक्यै नमः जलौकीम् आ० स्था० ६ । सोमपायै नमः सोमपाम् आ० स्था० ७ ॥

३ सप्त आभ्यन्तरमातृकाः-क्षमा सत्या च सीता च पार्वती भुवनेश्वरी ।
पद्माक्षी पद्मवदना सप्तैता मध्यमातरः ॥

ओं क्षमायै नमः क्षमाम् आ० स्था० १ । सत्यायै नमः सत्याम् आ० स्था० २ । सीतायै नमः सीताम् आ० स्था० ३ । पार्वत्यै नमः पार्वतीम् आ० स्था० ४ । भुवनेश्वर्यै नमः भुवनेश्वरीम् आ० स्था० ५ । पद्माक्ष्यै नमः पद्माक्षीम् आ० स्था० ६ । पद्मवदनायै नमः पद्मवदनाम् आ० स्था० ७ ॥

दयन्तामोꣳम्प्रतिष्ठ । ( य० अ० २ मंत्र १३ ) ॐ घृतमातृकाद्यत्राऽऽवाहिताः समस्तमातृकाः इहागच्छत इह तिष्ठत । इत्यक्षतान् प्रक्षिप्य ॐ घृतमातृकाद्यत्रावाहिताभ्यः समस्तमातृकाभ्यो नमः । इति मन्त्रेण सर्वोपचारैः पूजयेत् । ( अत्रापि नैवेद्यं पूर्ववदेव । ) ततो हस्ते पुष्पाण्यादाय पुष्पाञ्जलिं दद्यात् । ॐ समख्ये देव्याधियासन्दाक्षिणयोरुचक्षसा । मामऽआयुःप्रमोषीर्मोऽअहन्तववीरंविदेयतवदेविसन्दृशि ( य० अ० ४ मं० २३ ) ॥ १ ॥ ॐ गणपतिसहिताभ्यो गौर्याद्यत्रावाहिताभ्यः समस्तमातृकाभ्यो नमः । पुष्पाञ्जलिं समर्पयामि । इति पुष्पाणि प्रक्षिप्य हस्ते जलं गृहीत्वा—अनया पूजयाऽत्रावाहिताः समस्तमातरः प्रीयन्तां न मम इति जलमुत्सृज्य प्रार्थयेत्—भो गौर्यादिसमस्ताऽऽवाहिता मातरः मम सकुटुम्बस्यायुष्कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यस्तुष्टिकर्त्र्यः शुभदात्र्यो वरदात्र्यो भवत । इति ॥ ततः कुशजलदक्षिणाद्रव्याण्यादाय—ॐ अद्य पूर्वोच्चरितशुभपुण्यतिथौ अमुगोत्रः अमुकशर्मा विवाहकर्माङ्गभूतसमस्तमातृकापूजनसाङ्गतासिद्ध्यर्थं यथाशक्ति दक्षिणाद्रव्यं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय अहं संप्रददे । इति दक्षिणां दत्त्वा आयुष्यमन्त्रजपं कुर्यात् ॥

ले 'ॐ मनोजूति०' से 'इह तिष्ठत' पर्यन्त कह सभोंपर अक्षत छोड प्रतिष्ठा कर देवे । तब 'ॐघृतमातृकाद्यत्रा०' नाम मन्त्र कहता हुआ सर्वोपचारसे सभोंकी पूजा करे । ( यहां भी मातृका नैवेद्य पूर्ववत् । ) तदनन्तर अंजलीमें पुष्पोंको ले 'ॐ समख्ये०' से 'समर्पयामि' पर्यन्त कहकर सभोंपर पुष्पाञ्जलि छोड देवे । और हाथमें जल ले 'अनया०' से 'न मम' पर्यन्त कह जल छोडे, फिर हाथ जोड 'भो गौर्यादि०' से 'भवत' पर्यन्त वाक्य कह प्रार्थना करे । तब हाथमें कुश जल और दक्षिणाद्रव्य ले 'ॐ अद्य०' इत्यादि 'संप्रददे' पर्यन्त संकल्प पढ ब्राह्मणको दक्षिणा दे आयुष्य मन्त्र जपे ॥

## अथायुष्यमन्त्रजपः।

ॐ आयुष्ष्यव्वर्च्चस्यꣳरायस्प्पोषमौद्भिदम्। इदꣳ हिरण्ण्यं वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ ॐ नतद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्प्रथमजꣳह्येतत्। योबिभर्तिदाक्षायणꣳ हिरण्ण्यꣳसदेवेषुकृणुतेदीर्ग्घमायुः समनुष्ष्येषुकृणुतेदीर्ग्घमायुः ॥ २ ॥ ॐ यदाबध्नन्दाक्षायणाहिरण्ण्यꣳ शतानीकाय सुमनस्यमानाः। तन्मऽआबध्नामिशतशारदायायुष्ष्माञ्जरदष्ष्टिर्य्यथासम् ॥ ३ ॥ ( य० अ० ३४ मंत्र ५०, ५१, ५२ ) ॐ भद्द्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितं यदायुः ॥ ४ ॥ ॐ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम्। पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ५ ॥ ( य० अ० २४ मं० २१, २२. ) इति मातृकापूजनं विधायाभ्युदयिकश्राद्धं कुर्यादिति विधानं सर्वत्र दृश्यते, किन्तु विवाहकर्मणि बहुदेशेषु कुलेषु च मातृकापूजनानन्तरं स्वकुलदेवपितॄणां तथा कल्याण्याद्यनेकदेवतानां च निमन्त्रणपूजने कृत्वाऽऽभ्युदयिकश्राद्धं कुर्वन्ति, अतोऽत्राग्रे तथैव प्रयोगो लिखितः ॥ इति मातृकापूजनम् ॥

आयुष्यमन्त्र—'ॐ आयुष्यं०' से 'गन्तोः' पर्यन्त ५ मन्त्रोंको पढे। इस प्रकार मातृकापूजन करके तब आभ्युदयिकश्राद्ध करना ऐसा विधान सर्वत्र देखा जाता है किन्तु विवाहकर्ममें बहुत देशों और बहुत कुलोंमें मातृकापूजनके बाद स्वकुलदेव पितरों और कल्याणी आदि अनेक देवताओं का निमन्त्रण पूजन करके आभ्युदयिक श्राद्ध करते हैं। अतः आगे ऐसाही योप्रग लिखते हैं। इति मातृकापूजन ॥

## अथ देवपितृनिमन्त्रणप्रयोगः ।

यजमानः मातृकापूजनं कृत्वा पुनर्मण्डपे समागत्य तत्रासने प्राङ्मुख उपविश्य स्वस्य दक्षिणतो ग्रन्थिबन्धनयुतां पत्नीं तद्दक्षिणतः संस्कार्यपुत्रं कन्यां वा उपवेश्याचम्य कुशजलान्यादाय ॐ अद्य पूर्वोच्चारितशुभपुण्यतिथौ अमुकगोत्रः अमुकशर्म्मा मम पुत्रस्य ( कन्याया वा ) कर्त्तव्यविवाहाङ्गतया विहितं स्वकुलदेवादीनां पितॄणां तथा कल्याण्यादिविविधदेवतादीनां चास्मिन् विवाहमङ्गलकर्मणि निमन्त्रणं पूजनञ्चाहं करिष्ये । इति सङ्कल्प्य स्वपुरत आलेपनेनालेपितं मुखपिधानसहितभाण्डचतुष्टयं निधाय तत्र प्रथमभाण्डस्य मुखपिधानं वामकरेण किञ्चिदुद्घाट्य तस्मिन् भाण्डे दक्षिणहस्तेनाक्षतान् प्रक्षिपन् प्रत्येकवक्ष्यमाणवाक्यैः स्वकुलदेवादीनां निमन्त्रणं कुर्यात् । ॐ स्वकुलदेवेभ्यो नमः स्वकुलदेवान्निमन्त्रयामि अत्र स्थापयामि २ । ॐ स्वेष्टदेवेभ्यो नमः स्वेष्टदेवान्निमन्त्रयामि अत्र स्थापयामि २ । ॐ स्ववास्तुदेवेभ्यो नमः स्ववास्तुदेवान् निमन्त्रयामि अत्र स्थापयामि ३ । ॐ स्वग्रामदेवेभ्यो नमः स्वग्रामदेवान् निमन्त्रयामि अत्र स्थापयामि । ४ ॐ स्वक्षेत्रदेवेभ्यो नमः स्वक्षेत्रदेवान् निमन्त्रयामि अत्र स्थापयामि

अब देवपितृनिमन्त्रणप्रयोग—मातृकापूजन होजाने पर यजमान फिर मण्डपमें आकर आसनपर पूर्वाभिमुख बैठ अपने दक्षिण ग्रन्थिबन्धन करीहुई पत्नी और उसके दाहिने संस्कार्य संतानको भी बैठाल, स्वयं आचमनकर हाथमें कुश जल ले 'ॐ अद्य०' से 'करिष्ये' पर्यन्त कह जल छोड देवे । फिर ढंकनेसे मुख ढंका और ऐपनसिन्दूरसे सुन्दर रंगाहुआ चार पात्र, अपने सामने रख एक पात्रके मुखपरका ढंकना बायें हाथसे कुछ खोलेहुये, उसी पात्रमें दक्षिणहाथसे आगे कहे हरएक वाक्योंसे अक्षतोंको छोडताहुआ स्वकुलदेवादि पांचका निमन्त्रण करके इनका पूजन 'ॐ स्वकुलेष्ट०' इन

॥ ५ ॥ इत्यावाह्य सर्वोपचारैः ॐ स्वकुलेष्टवास्तुग्रामक्षेत्रदेवादिभ्यो नमः। इति मन्त्रेण संपूज्य भाण्डमुखं पिधापयेत् ॥ ततो द्वितीयभाण्ड-मुखं पूर्ववत् किञ्चिदुद्घाट्य कल्याण्यादिकाः निमन्त्रयेत्। ॐ कल्याण्यै नमः कल्याणीं निमन्त्रयामि अत्र स्थापयामि १। ॐ सर्वेभ्यः संवत्सर अयनऋतुमासपक्षतिथिवारनक्षत्रयोगकरणराशिलग्नमुहूर्तेभ्यो नमः सर्वा-नेतान् वत्सरादिकान् निमन्त्रयामि अत्र स्थापयामि २। ॐ सर्वेभ्यो गणपत्यादिपञ्चलोकपालेन्द्रादिदशदिक्पालैकादशरुद्राष्टवसुभ्यो नमः सर्वानेतान् गणपत्यादिपञ्चलोकपालादिकान् निमन्त्रयामि अत्र स्थाप-यामि ३। ॐ सर्वेभ्यो भूरादिचतुर्दशलोकेभ्यस्तथैकोनपञ्चाशन्मरुत्स-प्तसागरगङ्गादिसरिद्भ्यो नमः सर्वानेतान् भूरादिचतुर्दशलोकादिकान् निमन्त्रयामि अत्र स्थापयामि ४। ॐ सर्वेभ्यः कश्यपादिसर्वर्षिनारदा-दिसर्वमुनिभ्यो नमः सर्वानेतान् कश्यपादिकान् निमन्त्रयामि अत्र स्थापयामि ५। ॐ सर्वेभ्यो अधिप्रत्यधिदेवसहितसूर्यादिनवग्रहस्कन्दा-दिबालग्रहेभ्यो नमः सर्वानेतान् सूर्यादिग्रहादिकान् निमन्त्रयामि अत्र स्थापयामि ६। ॐ सर्वेभ्यः पञ्चाशत्क्षेत्रपालचतुःषष्टियोगिनीभ्यो नमः सर्वानेतान् क्षेत्रपालादिकान् निमन्त्रयामि अत्र स्थापयामि ७। ॐ सर्वेभ्यो वरुणाग्निमेघदेवोपदेवदानवगन्धर्वाप्सरसोयक्षराक्षसना-गपन्नगव्यालभूतप्रेतपिशाचब्रह्मराक्षसवेतालडाकिनीशाकिनीविद्युद्भ्यो नमः सर्वानेतान् वरुणादिकान् निमन्त्रयामि अत्र स्थापयामि ८। ॐ सर्वेभ्यस्त्रैलोक्यस्थचराचरभूतेभ्यो नमः सर्वाण्येतानि त्रैलोक्यस्थचराचरभूतानि निमन्त्रयामि अत्र स्थापयामि ॥ ९ ॥

नाममन्त्रसे सर्वोपचारद्वारा कर पात्रका मुख ढांप देवे। ऐसेही दूसरे पात्रका भी मुख खोल 'ॐ कल्याण्यै०' आदि ९ वाक्योंसे निमन्त्रण और 'ॐ

इत्यावाह्य सर्वोपचारैः ॐ कल्याण्यादिचराचरभूतान्तनिमन्त्रितेभ्यस्सर्वेभ्यो नमः । इति मन्त्रेण संपूज्य भाण्डमुखं पिधापयेत् ॥ ततस्तृतीयभाण्डमुखं तथैव किञ्चिदुद्घाट्य तत्र पितॄन् निमन्त्रयेत् ॥ ( मङ्गलकार्यत्वादत्र पितॄणामपि निमन्त्रणपूजनादिकं देवतुल्यं सव्यादिनैव भवति । ॐ पैतृकविश्वेभ्यो देवेभ्यो नमः पैतृकविश्वान्देवान् निमन्त्रयामि अत्र स्थापयामि १ । ॐ पितृपितामहप्रपितामहेभ्यो नमः पितृपितामहप्रपितामहान् निमन्त्रयामि अत्र स्थापयामि २ । ॐ मातृपितामहीप्रपितामहीभ्यो नमः, मातृपितामहीप्रपितामहीः निमन्त्रयामि अत्र स्थापयामि ३ । ॐ मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नमः, मातामहप्रमातामहवृद्धप्रमातामहान् सपत्नीकान् निमन्त्रयामि अत्र स्थापयामि ४ । ॐ मद्धस्ताधिकारिभ्यः समस्तपितृभ्यो नमः, मद्धस्ताधिकारिणः समस्तपितॄन्निमन्त्रयामि अत्र स्थापयामि ५ । इत्यावाह्य, सर्वोपचारैः समस्तपितृभ्यो नमः इति मंत्रेण संपूज्य भाण्डमुखं पिधापयेत् ॥ ततश्चतुर्थभाण्डमुखमुद्घाट्य तत्र मण्डपे यत्कृतम् अपूपादिकं तद्यथावकाशं भाण्डे धृत्वा समस्तनिमन्त्रितेभ्यो बलिं दद्यात् । हस्ते जलमादाय—ॐ भाण्डत्रयाभ्यन्तरस्थितेभ्यः सर्वेभ्यो निमन्त्रि-

कल्याण्यादि० इस नाम मन्त्रसे पूजन कर पात्रका मुख ढाँपे । इसी प्रकार तीसरे पात्रमें पितरोंका ( मङ्गलकार्यमें पितरोंका भी देवतुल्य सव्य और पूर्वाभिमुखही सर्वकर्म होता है । ) निमन्त्रण 'ॐ पैतृकविश्वेभ्यो०' आदि पांच वाक्योंसे और 'ॐ समस्तपितृभ्यो०' इस नाम मन्त्रसे पूजनकर, पात्रका मुख ढाँकदेवे ॥ और चौथे पात्रका मुख खोल, इसमें गुलगुला पुआ या जो वस्तु मातृका नैवेद्यादिके लिये पहिलेही बना रखा था उसीमें जो अब मातृकानैवेद्यसे बचीहुई वस्तु है उसीको यथावकाश भर देवे । फिर हाथमें कुश

तेभ्यः सुपूजितेभ्यः स्वकुलदेवतादिभ्यो नमः । एवं मिष्टान्नादिबलिं समर्पयामि । भो स्वकुलदेवतादयो यूयं यथाभागममुं बलिं गृह्णीत । इति जलमुत्सृज्य प्रार्थयेत्—

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयोमुनयो गावो देवमातर एव च ॥ १ ॥
योगिन्यः क्षेत्रपालाश्च सर्वे यत्र समागताः ।
नगरे वाथ ग्रामे वा अटव्यां सरितस्तथा ॥ २ ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ते सर्वे चैव सन्तुष्टा बलिं गृह्णन्तु मे सदा ॥ ३ ॥
शरणागतोस्म्यहं तेषां सर्वे ते मम सुप्रदाः ।
बलिदानेन संतुष्टाः प्रयच्छन्तु ममेप्सितम् ॥ ४ ॥
सर्वकार्याणि कुर्वन्तु दोषांश्च घ्नन्तु मे सदा ।
सर्वे वैवाहिके रक्षां प्रकुर्वन्तु मुदान्विताः ॥ ५ ॥

इति संप्रार्थ्य दृषत्पेषणसमये पत्न्या पेषितं यत् सुरक्षितं द्विदलपिष्टं तदादाय तेन पिधानसहितं भाण्डचतुष्टयमुखम् अवरुद्ध्य आलेपनेनानुलिप्य सिन्दूराङ्कितं कृत्वा गौर्यादिमातृकासमीपे निदध्यात् ॥ ततस्त्वाभ्युदयिकश्राद्धमारभेत् ॥

इति विवाहसोपाङ्गविधौ देवपितृनिमन्त्रणप्रयोगः ॥

जल ले ' ॐ भाण्डत्रयाभ्यन्तर० ' से 'गृह्णीत' पर्यन्त कह जल छोड देवे और हाथ जोड 'देवदानव०' इत्यादि ५ श्लोकोंसे प्रार्थना करके फिर सिलपोहना में पिसीहुई दालकी पिट्ठीसे इन चारों पात्रोंके ढपनासहित मुखको प्रलेपन कर बन्द कर देवै और उसपरभी ऐपन सिन्दूर लगाय गौर्यादि षोडशमातृकाके समीप लेजाकर धर देवे । तब आभ्युदयिकश्राद्धका कर्म आरम्भ करे ॥ इति देवपितृनिमन्त्रणप्रयोग ॥

## अथाभ्युदयिकश्राद्धम् ।

तत्रादौ किञ्चिद्विचारः । अत्राभ्युदयिकश्राद्धवृद्धिश्राद्धनान्दीमुखश्राद्धेत्येकस्यैव कर्मणः पर्यायैर्नामानि सन्ति इति ॥ तत्र नान्दीमुखनिरुक्तिर्भरतेनोक्ता—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते ।
देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते ॥ १ ॥
( नान्दी—शुभाशीर्मुखे येषां ते नान्दीमुखाः । इति )

तत्र कालः । पृथ्वीचन्द्रोदये ब्राह्मे—

जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।
पितन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥ २ ॥
वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा ।
पितॄन् पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये ॥ ३ ॥

हेमाद्र्यादिनिबन्धे—

मातृश्राद्धं तु पूर्वाह्णे मध्याह्ने पैतृकं तथा ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ ४ ॥

**आभ्युदयिक श्राद्धमें विचार**—इसी आभ्युदयिक श्राद्धको वृद्धिश्राद्ध या नान्दीमुख श्राद्ध भी कहते हैं । नान्दीमुखशब्दकी निरुक्ति भरतने कहा है कि, देवद्विजनृपादिकोंकी आशीर्वचन संयुक्त स्तुति जिससे प्रवृत्त हो, उसीको "नान्दी" कहते हैं ॥ १ ॥ ( नान्दी अर्थात् शुभाशीर्वचन मुखमें हो जिनके वे नान्दीमुखपितर कहे जाते हैं । ) नान्दीमुख पितरोंके श्राद्धका काल पृथ्वीचन्द्रोदय तथा ब्राह्ममें कहा है कि पुत्रके जन्ममें, उपनयन और विवाहमें विधिपूर्वक श्राद्ध कर नान्दीमुख पितरोंको तृप्त करे ॥ २ ॥ वनस्थादि आश्रमोंको जाते समय कर्म सिद्ध होनेके लिये एक दिन पहिलेही अथवा जानेके दिन उसी समय पूर्वोक्त विधिसे नान्दीमुख पितरोंके तृप्त्यर्थ श्राद्ध करे ॥ ३ ॥ हेमाद्र्यादि निबन्धोंमें कहा है कि, वृद्धि कर्मोंमें मातादिक श्राद्ध दिनके पूर्वभागमें, तथा पितादिका मध्याह्नमें और सपत्नीक मातामहा-

वृद्धमनुः-अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः।
पूर्व्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥ ५ ॥
लौगाक्षिस्मृतौ-पूर्वाह्णो वै भवेद्‌वृद्धिर्विनाजन्मनिमित्तकम्।
पुत्रजन्मनि कुर्व्वीत श्राद्धं तात्कालिकं बुधः ॥ ६ ॥
पृथ्वीचन्द्रोदये वृद्धपराशरः-
सुवेषभूषणैस्तत्र सालङ्कारैस्तथा नरैः।
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यं सुब्राह्मणैः सह ॥
स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादिहर्षिताः ॥ ७ ॥
हेमाद्रौ ब्रह्माण्डे-
कुशस्थाने तु दूर्वाः स्युर्मङ्गलस्याभिवृद्धये।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥ ८ ॥
चन्द्रोदये ब्राह्मे छन्दोगपरिशिष्टे च-
शाल्यन्नं दधिमध्वक्तं बदराणि यवास्तथा।

दिका श्राद्ध मध्याह्नोत्तरकालमें करना चाहिये ॥ ४ ॥ वृद्धमनुने कहा है कि भिन्नभिन्नकालोंमें तीनोंके निमित्त आभ्युदयिक श्राद्ध करनेका यदि समय नहीं मिले तो कर्त्तव्य संस्कारसे पहिले दिन मातृपूर्वक तीनों नान्दीश्राद्ध दिनके पूर्वभागमें एक साथ ही करलेवे। लौगाक्षिस्मृतिमें कहा है कि पुत्रके जन्मसे तत्काल वृद्धिश्राद्ध करना चाहिये और तद्भिन्नकर्मोंमें दिनका पूर्वभाग ही वृद्धिश्राद्ध करनेका काल है ॥ ६ ॥ पृथ्वीचन्द्रोदयमें वृद्धपराशरका कथन है कि, आभ्युदयिकश्राद्ध करते समय सुन्दर ब्राह्मणोंके सहित अलङ्कार और भूषणोंसे सुसज्जित कुंकुम तिलक तथा सुगन्धि द्रव्योंको शरीरमें लगाये हुये पुरुष ऐसेही आभूषण वस्त्रादिसे श्रृङ्गार किये हुये नृत्यगीतादिसे परमहर्षिता स्त्रियोंको भी रहना चाहिये ॥ ७ ॥ हेमाद्रि और ब्रह्माण्डमें लिखा है कि मङ्गलवृद्धिके लिये पितरोंका आभ्युदयिकश्राद्ध करनेमें अपसव्य होकर हाथके पितृतीर्थसे कर्मोंको नहीं करे, किन्तु सव्य और देवतीर्थसे ही श्राद्धकर्म करना और कुशोंके स्थानमें दूर्वाओंका प्रयोग करना चाहिये ॥ ८ ॥ चन्द्रोदय एवं ब्राह्म और छन्दोगपरिशिष्टमें कहा है कि आभ्युदयिकश्राद्ध करनेमें दही और मधुसे सनाहुआ शालिचावलोंका भात, तथा बदरी ( बेरका फल

मिश्रीकृत्वा तु चतुरः पिण्डान् श्रीफलसन्निभान् ।
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ॥ ९ ॥

भविष्ये—पिण्डनिर्व्वपणं कुर्यान्न वा कुर्याद्विचक्षणः ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥ १० ॥

वृद्धपराशरः- नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ।
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतम् ॥ ११ ॥

इदञ्च 'मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्यम् । तत्र माता महाः सपत्नीकाः' इति पृथ्वीचन्द्रोदये गारुडे गद्यरूपेण पाठात् । इति ॥ तच्च साङ्कल्पिकविधिना कर्तव्ये-स्मृतिसंग्रहे उक्तम्—

शुभाय प्रथमान्तेन वृद्धौ संकल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्य्यान्महादोषोऽभिजायते ॥ १२ ॥
अनस्मद्वृद्धिशब्दानामरूपाणामगोत्रिणाम् ।
अनाम्नामतिलैश्चैव नान्दीश्राद्धञ्च सव्यतः ॥ १३ ॥ इति ॥

या पत्ता ) और यव ( जवा ) इनको एकही साथ मिलाकर बेल फलके समान चार पिण्ड तैय्यारकर विधिपूर्वक नान्दीमुख पितरोंके लिये देना ॥९॥ भविष्यपुराणमें कहाहै कि अपने कुलधर्मको देखकर वृद्धिश्राद्धमें जैसा होता हो पिण्ड देवे अथवा नहीं देवे ॥ १० ॥ वृद्धपराशरका वाक्य है कि, विश्वे-देव पूर्वक नान्दीमुख पितरोंके निमित्त कुशों ( दूर्वा ) का आसन प्रदक्षिण क्रमसे देना चाहिये ॥ ११ ॥ और पृथ्वीचन्द्रोदय तथा गरुडपुराणमें गद्य-रूपसे लिखा है कि मातादि तीन,पितादि तीन और मातामहादि सपत्नीक तीन इस क्रमसे नव दैवत वृद्धिश्राद्ध करना । वृद्धिश्राद्ध यदि साङ्कल्पिक विधिसे कर्त्तव्य हो तो स्मृतिसंग्रहमें कहा है कि, शुभके लिये होनेवाले वृद्धि-श्राद्धमें प्रथमाविभक्त्यन्तपद सङ्कल्प वाक्योंमें कहे । षष्ठ्यन्त पद कहना महान् दोषकारक होता है ॥ १२ ॥ और वृद्धि श्राद्धमें अस्मत् पद गोत्र, पितरोंके नाम, तथा वस्वादि स्वरूप नहीं कहे । तिलोंका प्रयोग नहीं करे ।

अत्र साङ्कल्पिकश्राद्धे–समन्त्रकावाहनार्घाग्नौकरणपिण्डदानविकिराक्षय्यस्वधावाचनप्रश्नेत्येतत्सप्तकं वर्ज्यम् ॥
शास्त्रार्थप्रदीपे–

मण्डपोद्वासनात्पूर्वं नान्दीश्राद्धे कृते पुनः ।
ये कुर्वन्ति नरा मोहादपमृत्युं व्रजन्ति ते ॥ १४ ॥
कृते नान्दीमुखे मध्ये न कुर्य्याद्द्वितयं पुनः ।
राजाभिषेके कुर्वीत तथैव पुत्रजन्मनि ॥ १५ ॥

अथ वृद्धिश्राद्धकर्त्तुर्जीवत्पितृकत्वे संक्षेपनिर्णयः ।

"जीवेत्तु यदि वर्गाद्यस्तद्वर्गन्तु परित्यजेत्" इति न्यायेन जीवत्पितृकः स्वापत्यसंस्कारेषु मातृमातामहपार्वणयुतं नान्दीश्राद्धं कुर्यात् । मातरि जीवत्यां मातामहपार्वणमेकमेव । मातामहे जीवति

यह माङ्गलिक श्राद्ध कहाता है. अतः नान्दीमुख श्राद्धको सव्यहीमें करना चाहिये ॥ १३ ॥ और साङ्कल्पिक नान्दीश्राद्धमें समन्त्र आवाहन, अर्घदान अग्नौकरण, पिण्डदान. विकर, अक्षय्य, स्वधावचन और प्रश्न ये सातों कर्माङ्ग त्याज्य हैं । बाकी और सब किये जाते हैं ॥ शास्त्रार्थप्रदीपमें कहा है कि, नान्दीमुख करनेपर विना मण्डपोद्वासन किये जो मोहवश दूसरा नान्दीश्राद्ध करदेते हैं वे अपमृत्युको प्राप्त होते हैं ॥ १४ ॥ किसीकर्ममें एक नान्दीमुख श्राद्ध करके फिर दूसरा नान्दीमुख श्राद्ध नहीं करना चाहिये । यदि बीचहीमें पुत्रका जन्म हो या राजाभिषेक हो तो पहिलेकी आवाहित षोडश मातृकाओंका विसर्जन करके दूसरा नान्दीश्राद्ध करना चाहिये । अन्यथा नहीं ॥ १५ ॥

वृद्धिश्राद्धकर्ताके पिता या कोई वर्गादि जीवित हों तो वह कैसे श्राद्धकरेगा ? यह निर्णय अतिसंक्षेपमें यहां लिखते हैं जिस वर्गका आद्य जीवित हो उस वर्गको छोड देवे, इस न्यायके अनुसार इस प्रकार कर्म करे कि, जैसे जिसका पिता जीवित हो वह अपने पुत्रके संस्कारोंमें माता तथा नाना

मातृपार्वणमेकमेव । केवलमातृपार्वणे विश्वेदेवा न कार्याः । वर्गत्रयाद्येषु मातृपितृमातामहेषु जीवत्सु नान्दीश्राद्धलोप एव सुतसंस्कारेषूचितः । द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिपुस्त्वसंस्कारकर्मसु "येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः" इत्यादिविशेषविचारस्तु निर्णयसिन्ध्वादिधर्मग्रन्थेषु द्रष्टव्यः ॥ इति ॥

## अथ सांकल्पिकविधिनाभ्युदयिकश्राद्धप्रयोगः ।

तत्र सव्येन सर्वं कर्म कर्त्तव्यम् । ऋजव एव कुशाः दूर्वाः वा तिलकार्ये यवाः कर्त्तव्याः । यजमानः मातृकापूजनं कृत्वा पुनर्मण्डपे समागत्य तत्रासने प्राङ्मुख उपविश्य स्वस्य दक्षिणतः पत्नीं तद्दक्षिणतः आदिका श्राद्ध करे । यदि माता भी जीवित हो तो नानाही आदिका श्राद्ध करे । केवल मातृश्राद्धमें विश्वेदेवोंको नहीं करे । यदि माता पिता और नाना ये तीनों वर्गादि जीवित हों तो पुत्रके संस्कारोंमें नान्दीश्राद्धका लोपही होजाताहै, अर्थात् वृद्धिश्राद्ध नहीं करना । यदि अपने कोई संस्कार जैसे द्वितीय विवाह या श्रौत स्मार्त अग्निस्थापन, पुत्रेष्टि सोमयागादि कर्मोंमें अपने पितादि जीवित हों तो जिन २ के नामसे पिता श्राद्ध करे, उनही २ के नामसे पुत्र भी आभ्युदयिकश्राद्ध करे । एवं और भी विचार जैसे किसीकी माता और नाना दोनोंही मरे हों और पिता जीवित हों तो वह अपने संस्कारोंमें पिताकी माता, पितामही, प्रपितामही, माताके पिता, पितामह, प्रपितामह, पिताके मातामह, प्रमातामह, वृद्धप्रमातामह सपत्नीक नान्दीमुखोंके नामसे श्राद्ध करे, किन्तु माताके नाना आदिका नहीं करे इत्यादि औरभी ऐसेही विचारोंको निर्णयसिन्धु आदि अनेक धर्मग्रन्थोंमें देख निश्चय करना । इति ॥

**साङ्कल्पिकविधिसे आभ्युदयिकश्राद्धप्रयोग**—इस श्राद्धके सभी कर्म सव्य तथा कुशोंके स्थानमें दूर्वा और तिलके स्थानमें यवसे करना चाहिये । और इस श्राद्धमें सत्य वसु संज्ञक नान्दीमुख विश्वेदेव माने जाते हैं । यज-

पुत्रं कन्यां वा उपवेश्य धृतपवित्रपाणिःआचम्य प्राणायामत्रयं कुर्यात् । ततो हस्ते दूर्वायवजलान्यादाय ॐ अद्य पूर्वोच्चरितशुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा मम अमुकनामपुत्रस्य कन्यायाः वा श्वः अद्य वा कर्तव्यविवाहाङ्गत्वेन साङ्कल्पिकेन विधिना नान्दीश्राद्धमहं करिष्ये इति संकल्प्य । ततः स्वस्याग्रत आस्तृतपत्रावल्यां दक्षिणोत्तरक्रमेण चतुष्कोष्टकस्थानानि आलेपनेनोपकल्प्य । तत्रोत्तरत आरभ्य एकैकस्मिन् कोष्टके पाद्यादिकं दद्यात् । यथा--पाद्यमादाय सत्यवसुसंज्ञकाः विश्वेदेवाः युग्मरूपाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः १ । स्वगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः २ । स्वगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ३ । द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ४ । तत आसनदानम्--सत्यवसुसंज्ञकानां विश्वेषां देवानां युग्मरूपाणां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः । नान्दीश्राद्ध क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ

मान मातृकापूजनसे निवृत्त हो पुनः मण्डपमें आकर पूर्वाभिमुख आसनपर बैठ, अपने दक्षिणमें स्त्री और उसके दाहिने संस्कार्य पुत्र वा कन्याको भी बैठालकर हाथकी अंगुलियोंमें दूर्वाकी बनी पवित्री धारण कर तीन आचमन तथा प्राणायाम करे । और हाथमें दूर्वा यव जल लेकर 'ॐ अद्य०' इत्यादि वाक्योंमें जहां जिसका नाम हो कहता हुआ 'करिष्ये' पर्यन्त पूराकर जल छोडदेवे । फिर अपने आगे पत्रावलीपर ऐपनसे दक्षिणोत्तर क्रम चार कोष्ठक बनाय, इनमें उत्तर कोठेसे आरम्भ कर आगे कहे 'सत्यवसु' से 'वृद्धि' पर्यन्त आदि एकएक वाक्योंद्वारा पाद्यादि सभी वस्तुओंको एक एक कोठेपर क्रमसे देवे । जैसे हाथमें दूर्वा यव जल ले ( पाद्य ) चारों कोष्ठक पर ऐसेही

प्राप्नुवाव १। स्वगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः। नान्दीश्राद्धे क्षणौ क्रियेताम् तथा प्राप्नुतां भवन्तौ प्राप्नुवाव २। स्वगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः। नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ प्राप्नुवाव ३। द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा संपद्यतां वृद्धिः। नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ प्राप्नुवाव ४॥ ततो गन्धादिदानम्—गन्धाः पान्तु, अक्षताः पान्तु, पुष्पाणि पान्तु। एवं सर्वत्र गन्धादिकं दत्त्वा सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो युग्मरूपेभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः १। स्वगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः २। स्वगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ३। द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ४॥ ( ततस्तण्डुलदधिमधुदूर्वाबदरीपत्राण्येकीकृत्य मिलितान्येव कव-

दूर्वाका चार आसन। और गन्धादि चढाकर, समर्पणका जल चारोंपर छोड

---

१ पिण्डदानादिरहितनान्दीमुखश्राद्धे सांकल्पिकविधिनापि कर्तव्ये, नान्दीमुखानां पितॄणां परमाह्लादकत्वन्माङ्गलिकद्रव्यात्वाच्च तण्डुलदधिमधुदूर्वाबदरीपत्राण्येकीकृत्य तेभ्यो गन्धादिदानान्ते दद्यादिति केषाञ्चिन्मतमित्यतोऽत्र कोष्ठकान्तर्गत एव लिखितोऽस्ति।

पिण्डदान रहित नान्दी श्राद्ध सांकल्पिक विधिसे भी करनेमें नान्दीमुख पितरोंको परमाह्लादक और माङ्गलिक द्रव्य होनेके कारण तण्डुल दधि, मधु, दूर्वा और बदरी पत्रोंको एकत्रितकर गन्धादि देने बाद चारोंपर देवे। ऐसा किसीका मत है, अतः इसके चारों वाक्य मूलके कोष्ठकमें लिखा दिया है॥

लकवलमात्राणि गृहीत्वा सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो युग्मरूपेभ्यः ॐ भूर्भुवः स्वः इमानि तण्डुलादीनि स्वाहा १ । स्वगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः ॐ भूर्भुवः स्वः इमानि तण्डुलादीनि स्वाहा २ । स्वगोत्रेभ्य पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इमानि तण्डुलादीनि स्वाहा ३ । द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यस्सपत्नीकेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इमानि तण्डुलादीनि स्वाहा ४ ॥ इति चतुर्ष्वासनसमीपस्थानेषु धृत्वा हस्ते जलमादाय सत्यवसुसंज्ञकाः विश्वेदेवादेवताः युग्मरूपाः नान्दीमुखाः ॐ भूर्भुवः स्वः मद्दत्तैरेतैस्तण्डुलदधिमधुदूर्वाबदरीपत्रैः कल्याणं नः संपद्यतां वृद्धिः १ । स्वगोत्राः मातृपितामहीप्रपितामाह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः मद्दत्तैरेतैस्तण्डुलदधिमधुदूर्वाबदरीपत्रैः कल्याणं नः संपद्यतां वृद्धिः २ । स्वगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः मद्दत्तैरेतैस्तण्डुलदधिमधुदूर्वाबदरीपत्रैः कल्याणं नः संपद्यतां वृद्धिः ३ । द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः मद्दत्तैरेतैस्तण्डुलदधिमधुदूर्वाबदरीपत्रैः कल्याणं नः संपद्यतां वृद्धिः ४ ॥ [1] ततो भोजननिष्क्रय-

देवे । फिर चावल दही मधु दूव और वेरके पत्तोंको एकत्रित कर इसमेंसे कवल कवलके अंदाज स्वाहान्त चरवाक्योंसे अलग अलग चारों कोष्ठकके आगे क्रमसे धर देवे, फिर हाथमें जल ले ' वृद्धि ' पर्यन्तके चार वाक्योंसे चारोंके समीप छोडे और भोजननिष्क्रय दानके जो एक एक स्थानके निमित्त

---

१ नान्दीश्राद्धे अन्नाभावे आमम्, आमाभावे हिरण्यम्, हिरण्याभावे युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं यथाशक्ति किंचिद्द्रव्यमिति धर्मसिन्धुः ।

दानम्—द्रव्यदूर्वायवजलान्यादाय सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो युग्मरूपेभ्यः ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तदास्यमानमन्नं तन्निष्क्रयीभूतं किञ्चिद्धिरण्यादिकं वा अमृतरूपेण स्वाहा संपद्यतां वृद्धिः १ । स्वगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तदास्यमानमन्नं तन्निष्क्रयीभूतं किञ्चिद्धिरण्यादिकं वा अमृतरूपेण स्वाहा संपद्यतां वृद्धिः २ । स्वगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्य ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तदास्यमानमन्नं तन्निष्क्रयीभूतं किञ्चिद्धिरण्यादिकं : वा अमृतरूपेण स्वाहा संपद्यतां वृद्धिः ३ । द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तदास्यमानमन्नं तन्निष्क्रयीभूतं किञ्चिद्धिरण्यादिकं वा अमृतरूपेण स्वाहा संपद्यतांवृद्धिः ॥ ४ ॥ ततः सयवक्षीरमुदकदानम्—सत्यवसुसंज्ञका विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम् १ । स्वगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम् २ । स्वगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः प्रीयन्ताम् ३ । द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाः नान्दीमुखाःप्रियन्ताम् ॥ ४ ॥ अथाशिषो ग्रहणम् । तत्र वक्ष्यमाणमन्त्रपाठः—ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषा-

दोदो ब्राह्मणोंके तृप्तिपर्यन्त भोजनार्थ अन्न अथवा उतनेका निष्क्रयभूत द्रव्य देनेका एक एक वाक्य लिखा है, हाथमें द्रव्य दूर्वा यव जल ले, क्रमपूर्वक एकएक वाक्यसे एक एक स्थानमें द्रव्य और जल छोड देवे । फिर दुग्ध और यवोंसहित जलदान क्रमपूर्वक चार वाक्योंसे चारोंके लिये कर हाथ जोड ‘ ॐ स्वस्तिन०’ इस मन्त्रसे आशिष ग्रहण करे । पुनः हाथमें दूर्वा जल

विश्वर्वेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ इति ॥ ततो दक्षिणासंकल्पः—सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो युग्मरूपेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थम् इमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणामहं संप्रददे १ । ( यवमूलमार्द्रकम् ) स्वगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं इमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणामहं संप्रददे २ । स्वगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं इमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणामहं संप्रददे ३ । द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नान्दीमुखेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं इमां द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणामहं संप्रददे ॥ ४ ॥ ततः प्रार्थना—

माता पितामही चैव तथैव प्रपितामही ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् ॥

ततो यजमानो वदेत्—नान्दीश्राद्धं संपन्नम् । द्विजाः—सुसम्पन्नम् इति वदेयुः । ततो वाजेवाजेति वाद्यं कृत्वा विसृजेत् ।

और दक्षिणा लेलेकर चारोंके संकल्प वाक्योंसे चारों स्थानोंमें देवे । फिर हाथ जोड 'माता पितामही०' आदि दो श्लोक कह फिर ब्राह्मणोंसे प्रार्थनापूर्वक पूछे कि 'नान्दीश्राद्धं संपन्नम्' नान्दीश्राद्ध पूराभया । तो ब्राह्मण उत्तर देवे कि सुसम्पन्नम्' अच्छी तरह पूराहुआ । तब बाजा बजातेहुये यजमान 'ॐ

१ नान्दीमुखोंकी दक्षिणा—मुनक्का आमला और अद्रक ( आदी ) है अथवा इनका मूल्य द्रव्य देना ।

वरस्य वामभागे वधूमुपवेशयेत् । वामभागे उपविष्टामेनामभिमन्त्रयति वरः। (सुमङ्गलीरितिप्रजापतिर्ऋषिर्वधूर्देवताऽनुष्टुप्छन्दः। अभिमन्त्रणे विनियोगः।) ॐ सुमङ्गलीरियंवधूरिमाᳪसमेतपश्यत । सौभाग्यमस्यै

नन्तर वामभागमें बैठीहुई वधूकी ओर देखता हुआ अथवा वधूके मस्तकपर अपना दहिना हाथ रखकर वर विनियोगसहित 'ॐ सुमङ्गली०' इस मंत्र

—तीसरा वचन यह कहती है कि, यदि अपने कुटुम्बियों और गऊ आदि सभी पशुओंका यथोचित पालन पोषण करना मेरे आधीन रखना आप स्वीकार करें तो मैं आपके वामाङ्गमें जाऊँ ॥ ३ ॥

आयव्ययौ धान्यधनादिकानां पृष्ट्वा निवेशं च गृहे निदध्याः।
वामाङ्गमायामि तदा त्वदीयं जगाद कन्या वचनं चतुर्थम् ॥ ४ ॥

चौथा वचन यह कहती है कि, अन्न तथा धन आदि और जो कुछ घरमें आवें उन सबको संचित रखना और मेरी सलाहसे उचितरूपमें खर्च करना यदि ऐसा आप स्वीकार करें तो मैं आपके वामाङ्गमें जाँऊँ ॥ ४ ॥

देवालयारामतडागकूपवापीर्विदध्या यदि पूजयेथाः।
वामाङ्गमायामि तदा त्वदीयं जगाद कन्या वचनं च पञ्चमम् ॥ ५ ॥

पाँचवाँ वचन यह कहती है कि यदि आप देवालय, बाग, तालाव, कूप या वावली आदि तैयार करावें तो उनके प्रतिष्ठापूजनादि कर्मोंमें मुझे भी साथ रखना स्वीकार करें तो मैं आपके वामाङ्गमें जाँऊँ ॥ ५ ॥

देशान्तरे वा स्वपुरान्तरे वा यदा विदध्याः क्रयविक्रयौ त्वम्।
वामाङ्गमायामि तदा त्वदीयं जगाद कन्या वचनं च षष्ठम् ॥ ६ ॥

छठवाँ वचन यह कहती है कि, अपने देश अथवा विदेशमें यदि कोई व्यापारी वस्तुओंके खरीदने तथा बेचनेका प्रबन्ध हो तो उसमें मेरी भी सहायता आप स्वीकार करें तो मैं आपके वामाङ्गमें जाँऊँ ॥ ६ ॥

न सेवनीया यदि पारकीया त्वया भवोद्भाविनिकामिनीति।
वामाङ्गमायामि तदा त्वदीयं जगाद कन्या वचनं च सप्तमम् ॥ ७ ॥

सातवें वचनमें वधू वरसे यह प्रार्थना करती है कि दूसरे पुरुषकी स्त्री चाहे कितनीही सुन्दरी हो किन्तु उसका सेवन नहीं करनेकी प्रतिज्ञा यदि आप करें तो मैं आपके वामाङ्गमें जाँऊँ ॥ ७ ॥

ततो वरस्त्वेकवचनद्वारा कन्योक्तं स्वीकुर्य्यात्। वरवचनं यथा—

पूर्वोक्त सात वचनोंके स्वीकार करनेमें वर एक श्लोक यह कहे कि—

मदीयचित्तानुगतं च चित्तं सदा मदाज्ञापरिपालनञ्च।
पतिव्रताधर्म्मपरायणत्वं कुर्य्याः सदा सर्वमिमं प्रयत्नम् ॥ १ ॥

दत्त्वायाऽथास्तं विपरेतन ॥ इत्यभिमन्त्रयेत् । ( अस्मिन्नभिमन्त्रणावसर एव वध्वाः सीमन्ते ललाटे च वरः वक्ष्यमाणमन्त्रान्पठन् सिन्दूरं ददाति । तत्र सिन्दूरदानमन्त्रः—ॐ त्वाममद्य संवितर्वामनुश्वोदिवेदिवे व्याम स्मभ्यंᳬसावीः । व्यामस्यहिक्षयस्यदेवभूरेरयाधिया व्यामभाजःस्याम ॥ ( य० अ० ८ मं० ६ ) ॐ दक्षिणत उहक उपदधातितदेताःपुण्या लक्ष्मीर्दक्षिणतोदधमइति ॥ तस्माद्यस्यदक्षिणतोलक्ष्मभवतितंपुण्यलक्ष्मीकइत्याचक्षतऽउत्तरतः स्त्रियाउत्तरतआयतनाहिस्त्रीतत्तत्कृतमेवपुरस्तात्त्वेवेनाउपदध्याद्यत्राहिवशि रस्तदेवहनूतज्जिह्वाथैताः पुण्यालक्ष्मीर्मुखतोधत्ते (?) तस्माद्यस्य मुखेलक्ष्मभवतितंपुण्यलक्ष्मीकइत्याचक्षते ॥ इति सिन्दूरदानम् ) ॥ पुनर्वधूं वरस्य दक्षिणभागे उपवेशयन्ति तत्रैव पतिपुत्रान्विताश्चतस्रः स्त्रियः सुभगास्तस्यै वध्वै सौभाग्यं दद्युः । ताभिर्वक्त-

इस मन्त्र द्वारा वधूको अभिमंत्रित करे। ( और इसी अवसरमें 'ॐवाममद्य० इस एक मन्त्रको अथवा 'इत्याचक्षते' पर्यन्त सिन्दूरदानके और भी मन्त्रोंको कहकर वधूके मांग और माथामें वर सिन्दूर लगावे ) पुनः वधूको वरके दक्षिणभागमें बैठालकर सुमङ्गली अर्थात् पतिपुत्रोंवाली सौभाग्यवती स्त्री सुमङ्गली कही जाती है, ऐसी ४ स्त्रियां वधूके समीप आय सुवर्णशलाकादिद्वारा वधूके सिन्दूर लगावें इसके अनन्तर विवाहस्थानसे पूर्व या उत्तर किसी परदेवाले

—मेरे चित्तके अनुसार तुम अपनाभी चित्त रखतीहुई सदाही हमारी आज्ञाका पालन आदि पतिव्रताधर्ममें परायण रहनेका प्रयत्न करती रहना तो सभी उचित होगा ॥ १॥

इति मिथः प्रतिज्ञां कुरुताम् । एतेषामभिप्रायांस्त्वाचार्य्यो वरवधूभ्यां सर्वांश्च श्रावयेत् ॥ एवं कन्यावरयोर्वचनप्रतिवचने जातेप्रेतनं कर्म कुर्यात् ॥

वरका पुरोहित इसकाभी भावार्थ सुनाय देवे और आगेका कर्म्म आरम्भ करावे। इति।

१ पतिपुत्रान्विता भव्याश्चतस्रः सुभगाः स्त्रियः ।
सौभाग्यमस्यै दद्युस्ता मंगलाचारपूर्वकम् ॥
पतिपुत्रवती नारी सुरूपगुणशालिनी ।
अविच्छिन्नप्रजा साध्वी सदया सा सुमंगली ॥

ऽयवाक्यम् । यथा—ॐ गौर्य्याः सावित्र्यास्तव सौभाग्यं भवतु । इति वधूदक्षिणकर्णे ताभिर्वक्तव्यमिति ॥ अथ बलवान् कश्चिद्ब्राह्मणो वरो वा वधूमुत्थाप्य प्रागुदग्वाऽनुगुप्तागारे लोहितानडुच्चर्मणि प्रागग्रानुदगग्रान्वा कुशानास्तीर्य तदुपरि, अथवा आस्तृतकुशेष्वेव समुपवेशयेत् । ( इहगाव इति प्रजापतिर्ऋषिः । लिङ्गोक्ता देवताऽनुष्टुप्छन्दः । उपवेशने विनियोगः ।) ॐ इहगावोनिषिदन्त्विहाश्वाइहपूरुषाः । निषीदन्तु इहसहस्रं दक्षिणोयज्ञइहपूषानिषीदतु॥इति मन्त्रेण॥अथ स्विष्टकृद्धोमः-ॐअग्नयेस्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते नमम।स्रुवावशिष्टाज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ।

घरमें लाल लोमवाले बैलके पूरे चमडे उत्तर या पूर्व सिरहना कर ऊपर बाल रहें, ऐसे बिछे हुयेपर कुशोंको बिछावे, यदि ऐसा वृषभचर्म नहीं हो तो, केवल पूर्वाग्र बिछाये कुशोंहीपर कोई बलिष्ठ ब्राह्मण अथवा वरही वधूको उठालेजाकर विनियोग सहित 'ॐ इहगावो०' मन्त्र पढकर बैठावे । तत्पश्चात् ब्रह्मासे कुशाद्वारा अन्वारब्ध हुआ वर घृतसे स्रुवाद्वारा 'ॐ अग्नये०' मन्त्रसे स्विष्टकृत् एक आहुति देके, स्रुवाका शेष घृतबिन्दु प्रोक्षणीपात्रमें गिरावै ॥

---

१ पश्चादग्नेरोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव । ( मा० गृ० ११ खण्डे १९ सूत्रम् )

अग्निसे पश्चिम लाल बैलके चर्मको पूर्व शिर ऊपर लोमका भाग करके बिछाय उसपर कुशोंको फैलाय, उसपर वधूको बिठावे अथवा चर्म न हो तो कुशोंहीपर बैठावे ॥

२ पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः । एकं स्विष्टकृतं कुर्य्यान्नानासत्यपि दैवते ॥ ( इति मा० गृ० सूत्र २ पुरुषस्य १८ खण्डान्ते लिखित सूत्रम् सर्वकर्मणि ग्राह्यम )

जिन पाकयज्ञोंमें प्रधान देवता अनेक हों उनमेंभी एकही घी रखे, एक परत कुश बिछावे और सबकी एकही स्विष्टकृत् आहुति करे । किन्तु कई देवताओंके लिये इन कामोंको पृथक् पृथक् न करे । यह परिभाषासूत्र सर्वत्रके लिये है ॥

अयं च होमो ब्रह्मणान्वारब्धकर्तृकः । ततः संस्रवप्राशनम् ॥ आचम्य ततः ब्रह्मणे पूर्णपात्रदक्षिणादानम्—ॐ अद्यकृतैतद्विवाहहोमकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिर्दैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे । इति ब्रह्मणे दक्षिणां दद्यात् । ॐ स्वस्ति इति प्रतिवचनम् । ततः आचार्यदक्षिणादानम्- ॐ अद्यकृतैतद्विवाहहोमकर्मणि आचार्यकर्मप्रतिष्ठार्थमिदं हिरण्मयम् अग्निर्दैवतं द्रव्यम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इत्याचार्याय दक्षिणां दद्यात् । ॐ स्वस्ति दम्पत्योरविच्छिन्ना प्रीतिरस्तु । वंशाभिवृद्धिरस्तु । सदा शुभं भूयात् इत्याचार्यो वदेत् । ततो ब्रह्मग्रन्थिविमोकः॥ततः अनामिकाङ्गुष्ठाभ्यां प्रणीतापात्रस्थिते पवित्रे गृहीत्वा प्रणीताजलेन ॐ सुमित्रियानऽआपओषधयःसन्तु । इति शिरः संमृज्य । ॐ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः ( य० अ० ३५ मन्त्र १२ ) इत्यैशान्यां दिशि प्रणीतान्युब्जीकरणम् । तत आस्त-

तत्पश्चात् वर, प्रोक्षणीपात्रमें गिरायेहुये संस्रवका प्राशन कर हाथ धोय आचमन करे । और ब्रह्माका पूर्णपात्र दक्षिणादि हाथमें ले 'ॐ अद्य०' इत्यादि गोत्र नाम कह 'संप्रददे' पर्यन्त पूरा सङ्कल्प कर ब्रह्माको पूर्णपात्र दक्षिणा दे देवे । और ब्रह्मा 'ॐस्वस्ति' ऐसा कह ले लेवें । पुनः वर आचार्यकी दक्षिणादि हाथमें ले 'ॐ अद्य' इत्यादि गोत्र नाम कह 'संप्रददे' पर्यन्त पूरा संकल्प कर आचार्यको दे देवे । और आचार्य 'ॐ स्वस्तिदंपत्यो०' इत्यादि वाक्योंको कहकर वर और वधूको आशीर्वाद देता हुआ दक्षिणादि ले लेवे । फिर कुशनिर्मित ब्रह्माका मोचन कर देवे ॥ तत्पश्चात् प्रणीतामें धरे पवित्रकके दो कुशपत्रोंको वर अपने अनामिकांगुष्ठोंसे ग्रहणकर 'ॐसुमित्रिया०' मन्त्र पढ इन पवित्रोंद्वारा प्रणीताजलसे अपने शिरपर मार्जन करे, और 'ॐ दुर्मित्रिया०' मन्त्रसे प्रणीताको ईशानकोणमें औंधा कर देवे । फिर

रणक्रमेण पवित्रसहितसर्वबर्हिरुत्थाप्य आज्येनाभिघार्य हस्तेनैव बर्हिर्होमः। तत्र मन्त्रः–ॐ देवागातुविदोगातुं वित्त्वागातुमित। मनसस्पतऽइमन्देवयज्ञꣳस्वाहा वातेधाः स्वाहा ( य० अ० ८ मं० २१ )। इदं वाताय न मम॥ तत उत्थाय वधूदक्षिणहस्तेन स्रुवस्पृष्टघृतपुष्पफलैः पूर्णाहुतिं वरः कुर्य्यात्। तत्र मन्त्रः ( मूर्द्धानन्दिव इति भारद्वाजऋषिः। वैश्वानरो देवता। त्रिष्टुप्छन्दः पूर्णाहुतिहोमे विनियोगः ) ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम्। कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाःस्वाहा। ( य० अ० ७ मं० २४ ) इदमग्नये न मम॥ तत उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना–ॐ त्र्यायुषंजमदग्नेः–इतिललाटे। ॐ कश्यपस्यत्र्यायुषम्–इति ग्रीवायाम्। ॐ यद्देवेषुत्र्यायुषम्–इतिदक्षिणांसे। ॐ तन्नोऽअस्तु त्र्यायुषम्–इति हृदि ( य०अ०३मं०६२ ) इति ललाटादौ भस्म योजयेत्। एवं वध्वा अपि कुर्य्यात्, तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः।ततो ब्राह्मणभोजनसंकल्पं कुर्य्यात्। यथा–कृतस्तरणक्रमसे पवित्रोंसहित सब कुशोंको उठाके उनमें आज्यस्थालीसे घी लगाकर 'ॐ देवागतु०' मन्त्रद्वारा ' न मम' पर्यन्त कहकर हाथसेही होम कर देवे. तदनन्तर वधूसहित वर खडा हो स्रुवाको घृतसे पूरित और पुष्पादिसहित नारियल या सुपारीसे युक्तकर वधूके दहिने हाथसे स्पर्श कराये हुये स्रुवाद्वारा घृतादि द्रव्योंसे 'ॐ मूर्द्धानं०' आदिसे 'न मम' पर्यन्त पढ पूर्णाहुति करदेवे। पुनः वधू और वर अपने अपने स्थानोंपर बैठ, वर स्रुवाद्वारा हवनाग्निसे भस्म ले अपने दहिने हाथकी अनामिकांगुलिके अग्रभागसे ' ॐ त्र्यायुषं०' से अपने ललाटमें, 'ॐ कश्यप०' से कण्ठमें, ' ॐ यद्देवेषु०' से दहिने कन्धेमें और 'ॐ तन्नो०' से हृदयमें भस्म लगावे। इसीके अनुसार वधूकेभी ललाटादिमें भस्म लगावे,परन्तु वधूके अङ्गोंमें लगातेसमय 'तन्नो'केस्थान में 'तत्ते' ऐसा कहे। तदनन्तर विवाहाङ्गभूत यथाशक्ति ब्राह्मणभोजनका कुश-

स्यास्य विवाहहोमाख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् भोजयिष्ये । तथैव भूयसीं दक्षिणाञ्च संकल्पयेत् । यथा— ॐ अद्य विवाहकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च दातुमहमुत्सृजे ॥ ततो वरपिताऽन्यो वा ब्राह्मणः आशीर्वादात्मकं दूर्वाद्रव्यसहितनारिकेलादिफलं वध्वै दद्यात् । तत्र मंत्रः—ॐ श्रीर्व्वर्च्चस्वमायुष्यमारोग्यमाविधात्पवमानम्महीयते । धान्यंधनंपशुं बहुपुत्रलाभं शतसम्वत्सरं दीर्घमायुः ॥

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ इति ॥

ततो द्रव्यादिभिर्नापितादींश्च संतोष्य वध्वा सहितो वरः कौतुकागारं व्रजेत् ॥ इति ॥

जल ले 'ॐ अद्य' इत्यादि कहकर संकल्प करे । पुनः कुशादि ले 'ॐअद्य०' इत्यादि कह भूयसी दक्षिणाभी सङ्कल्प करदेवे । तत्पश्चात् वरके पिता आदि कोई बडे, अथवा ब्राह्मण वधूके संमुख खडे हो, द्रव्यसहित दूर्वा और नारियलका गोला आदि हाथमें लेकर 'ॐ श्रीर्वर्चस्व' इत्यादि वैदिक मन्त्र तथा 'मन्त्रार्थाः' इत्यादि पौराणिक श्लोकको कह वधूके गोदमें छोडदेवें । और नापितादिकोंकोभी द्रव्यादि देकर सन्तुष्ट करनेके बाद, आगे वर और पीछे वधू होकर कौतुकागार ( कोहवर ) में जावै ॥

१ मानवगृह्यसूत्रेषु प्रथमपुरुषस्य द्वादशखण्डोक्तानि कौतुकागारकर्मप्रयोगानुसारक्रमेणात्र प्रमाणार्थं लिखितानि सूत्राणि । यथा—

"अथाभ्यञ्जति । अभ्यज्य केशान् सुमनस्यमानाः प्रजावरीर्यशसे बहुपुत्रा अघोराः । शिवा भर्त्तुः श्वशुरस्यावदायायुष्मती, श्वश्रुमतीश्चिरायुः । इति ( ३ सूत्रम् ) । अत्रैव सीमन्तं करोति । त्रिश्वेतया शल्लक्या समूलेन दर्भेण वा सेनाहृनामेत्येतया । ( २ सूत्रम् ) जीवोर्णयोपसमस्यति । समस्य केशानवृजिनानघोरान् शिवा सखीभ्यो भव सर्वाभ्यः । शिवा भव सुकुलोह्यमाना शिवा जनेषु सहवाहनेषु । इति ( ४ सूत्रम् ) ॥ तस्य स्वस्ति वाचयित्वा, समाना वा

## अथ कौतुकागारकृत्यम् ।

कौतुकागारं गतो वधूसहितो वरस्तत्र स्थितश्च मानवगृह्यसूत्रेषु प्रथमपुरुषस्य द्वादशखण्डोक्ततृतीयद्वितीयचतुर्थषष्ठपञ्चमसप्तमेति क्रमेणोक्तसूत्रविधिना यत् टिप्पण्यां कौतुकागारप्रयोगं लिखितं

अब कौतुकागारका कृत्य इस प्रकार करना चाहिये कि, वधूसहित वर कौतुकागारमें पहुंच आसन पर बैठ, और मानव गृह्यसूत्र प्रथम पुरुषके द्वादश खण्डमें कौतुकागारके कर्तव्यकर्मोंका जैसा टिप्पणीमें प्रमाणार्थ तीसरी, दूसरा चौथा, छठा, पांचवां और सातवां सूत्रप्रयोगानुसार क्रमसे लिख दिया है इसी विधिसे जो कौतुकागारप्रयोग ( टिप्पणीमें लिखा ) है प्रथम उसको वर और

---

–आकूतानीति सह जपति। ( ६ सूत्रम् )॥अथैनौ दधिमधु समश्नुतो यद्वा हविष्यंस्यात् ) इति (६ सूत्रम) ॥ उभौ सह प्राश्नीतः । इति (७ सूत्रम्) ॥" इति। इन सात सूत्रके अर्थ आगे लिखे "कौतुकागारकर्मप्रयोग" के देखनेसे स्पष्ट होजायंगे॥

१ अथ मानवगृह्यसूत्रोक्तविधिना कौतुकागारकर्मप्रयोगः ॥ कौतुकागारं गतो वधूसहितो वरस्तत्र स्वस्याग्रतः आसनोपरि वधूमुपवेश्य सुगन्धितलेन तस्याःकेशानभ्यञ्जेत् । तत्र मंत्रः–ओं अभ्यज्य-केशान् सुमनस्यमानाःप्रजावरीः यशसे बहुपुत्रा अघोराः। शिवा भर्त्तुः-श्वशुरस्यावदायायुष्मतीःश्वश्रुमर्तास्चिरायुः इति । ततः कङ्कतिकादिना तस्य केशान्सुसज्जितान् कृत्वा. त्रिभिः श्वेतशल्लकी कण्टकैः, समूलदर्भेण वा तान् केशान्-भागद्वये विभज्य शिरसि सीमन्तं कुर्य्यात् तत्र मंत्रः–ओं सेनाहनाम० इत्यादि पूर्णमंत्रं पठेत् । ततो जीवितमेषोर्णासूत्रैः केशानां वेणीः निर्माय ताः सर्वाः एकत्रैव बध्नीयात् । तत्र मन्त्रः ओं. समस्य केशानवृजिनानघोरान् शिवा सखीभ्यो भव सर्वाभ्यः।शिवा भवं सुकुलोह्यमाना शिवाजनेषु सहवाहनेषु । इति । तदनन्तरं वरः एकं ब्राह्मणं प्रति 'स्वस्ति ब्रू ३–हि, ( इत्यत्र ऊकारस्य प्लुतोच्चारणपूर्वक ब्रूयात् । ब्राह्मणः ', स्वस्ति '' इति वदेत् । ततो ब्राह्मणेन सह वरोऽपि समाना वा आकूतान्' इति पूर्णमंत्र पठेत् । ततो वधूवरावुभावपि सहैव एकस्मिन्नेव पात्रे दधि मधु प्राश्नीताम् । यद्वा हविष्यान्नं प्राश्नीताम् इति । ततो ग्राम्यवचनमपि मूलोक्तप्रकारेण कुर्य्यात् ॥

मानवगृह्यसूत्रोंमें कहे कौतुकागारकर्मप्रयोग इस प्रकार है कि–वधूके सहित वर कोहवरमें पहुंच यहाँ आसनपर अपने सामने वधूको बैठाकर उसके केशोंमें सुगन्धित तैल "ओं अभ्यज्य०" मन्त्र पढकर लगावे । फिर कङ्घी आदिसे बालोंको सुरक्षाय

तत्कर्माऽग्रे सम्यक्कृत्वैव ततो ग्राम्य[१]वचनमपि कुर्यात् अर्थात् तत्रत्याः स्त्रियः यथाकुलदेशाचारं गौरीपूजनं वधूवरक्रीडनं दधिमधुप्राशनादिकं च कारयन्ति । तथा एकस्मिन् दीपे पृथक् प्रज्वलितवर्तिकाद्वयं च सुवर्णशलाकादिना मेलयन्ति. तदर्थं द्रव्यदानादिना वरं संतोषयन्ति च । एवं सूत्राद्युक्तप्रयोगं कृत्वैव शुभसंस्कारो भवति । परश्चात्र प्रयोगस्याऽनभिज्ञत्वात् लौकिकाचारमात्रमेव स्त्रियः कारयन्ति । किन्तु वैदिको लौकिकश्च कर्म कुर्यादिति सिद्धान्तः ॥ ततो विवाहदिवसाञ्च-वधू कौतुकागार ( कोहवर ) में करके तत्पश्चात् ग्राम्य वचन अर्थात् कोहवरमें एकत्रितहुई स्त्रियां वरवधूसे लोकाचारके अनुसार गौरीपूजन. दोनोंका आपसमें कुछ क्रीडन, दधि और मिटाईका आपसमें प्राशन कराती हैं और एक दीपकमें अलग अलग जलतीहुई दो बत्तियोंको सोनेकी सलाई आदिसे दोनों बत्तियोंको एकत्रित कराकर एक ज्योति कराय देती हैं और ऐसा करनेके लिये वरको वस्त्र आभूषण द्रव्य आदि देकर संतुष्ट करती हैं, इस प्रकार सूत्रादिमें कहे रीतिसे कर्म करनेहीमें सुन्दर संस्कार होकर उत्तम प्रभाव होता है । परञ्च प्रयोगोंको नहीं जाननेके कारणही स्त्रियां लौकिकाचारमात्र ही करा

—तथा झाडकर साहीके तीन सफेद कांटोंसे, या जडदार कुशके मूलसे शिरमें माँगका काढना और " ओं सिनाहनाम " इस मन्त्रको पूरा पढ़देना । फिर सब बालोंकी चोटी बनावे और जीतेहुये मेढाके ऊनोंसे बने डोरोंके साथ ' ओं समस्य ' मन्त्रको पढताहुआ सबका जूडा बाँधदेवे । इसके बाद किसीएक ब्राह्मणसे वर कहे "स्वस्तिब्रू३हि" इस ब्रू ३ के ऊकारका उच्चारण वर प्लुत करे अर्थात् ऊँचे स्वरसे कहे । और ब्राह्मण " स्वस्ति " ऐसा कहदेवे । फिर ब्राह्मणके साथ वरभी " ओं समानावा आकूतानू " इस मन्त्रको पढे । तत्पश्चात् वर और वधू एकहो पात्रमें धराहुआ दही और मीठा मिलाकर अथवा हविष्यान्न एक साथही खावे । फिर हाँथ मुख धोकर, ग्राम्यवचन आगे लिखे अनुसार सभी कर्मोंयो पूरा करदेवे । इति कौतुकागारकर्मप्रयोगः ॥

१ ग्राम्या वृद्धाः स्त्रियः ता यद्देशजातिकुलाहाराद्यनुसारेण, शास्त्रेष्वनुक्तमपि ब्रूयुस्तदपि विवाहविषये कर्त्तव्यम्, इति पारस्करगृह्यसूत्रेप्युक्तम् ॥

पारस्करगृह्यसूत्रमें लिखा है कि, जाति और कुलरीतिके अनुसार, गाँवँकी वृद्धा स्त्रियाँ विवाहविषयमें जो कहें, यदि वह शास्त्रमें नहींभी हो, तो भी करना चाहिये, इति ।

तुर्थे दिने रात्रौ चतुर्थीहोमकर्म कुर्यात् । तथा विवाहदिवसादेव संवत्सरं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा अक्षारलवणाशिनौ अधःशायिनौ निवृत्त-मैथुनौ भवेताम् । यदास्मिन्नेवावसरे वधूप्रवेशोऽपि भवेत् तदा चतुर्थी-कर्मान्ते वधूप्रवेशमपि अग्रेलिखितप्रयोगाऽनुसारेण द्वावपि कृत्वा मण्ड-पोद्वासनं कुर्यात् । यद्यस्मिन् समये वधूप्रवेशं नेच्छेत्तदा चतुर्थीकर्मान्ते मण्डपोद्वासनं कुर्यात् । तस्य प्रयोगं तु वधूप्रवेशप्रयोगान्ते लिखित-मस्ति ॥ इति श्रीचिकित्सकचूडामणि० विरचितविवाहसोपाङ्गविधौ विवाहदिनकृत्यप्रयोगः ॥

देती है । किन्तु वैदिक तथा लौकिक दोनोंही कर्म करना चाहिये यही सिद्धा-न्त है ॥ जैसे कौतुकागार प्रयोगमें वधूके केशोंमें तैल लगाना, कंघीसे झाडना, साहीके कांटे या कुशमूलसे मांग काढकर चोटी गूथना और जीते हुये मेढाके ऊनसे बने डोरोंसे जूडा बांधना और दधि मीठा प्राशन आदि पूर्णरूपसे सभी कर्मोंके करनेमें सुविधा नहीं होनेसे केवल वरके हाथोंसे सभी स्थानोंको स्पर्श कराकर मन्त्रोंको पढना भी होजानेसे कुछ उत्तमही संस्कार हो जायगा और क्रमसे लोग पूर्णरूपसे करने लगेंगे इत्यादि । इस प्रकार विवाह दिनका कार्य पूराकरके विवाह दिनसे चौथे दिन रात्रिके समय चतुर्थी होम कर्म करना । तथा विवाह दिनहीसे एक वर्ष, बारह दिन, छः दिन अथवा कमसे कम तीन दिन तक वर वधू दोनोंही क्षार लवणादि नहीं खावें, चारपाई आदि ऊंचेपर नहीं अर्थात् नीचे सोवें, और निवृत्त मैथुनादि ब्रह्म-चारी रहें यदि इसी अवसरमें वधूप्रवेशभी करना हो तो आगे लिखे वधूप्रवेश प्रयोगके अनुसार करके मण्डपोद्वासन करें । अथवा वधूप्रवेश करनेका विचार नहीं हो तो चतुर्थी होमकर्म पर्यन्त अवश्यही करके मण्डपोद्वासन जैसा कि इस पुस्तकमें वधूप्रवेशकर्मके अन्तमें आगे मण्डपोद्वासनप्रयोग लिखा गया है उसी प्रकार करना चाहिये । यह विवाहदिन कृत्य प्रयोग पूरा हुआ ॥ इति बालबोधिनीटीकायां विवाहदिनकृत्यम् ॥

१ संवत्सरं न मिथुनमुपेयाताम्, द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः । ( पार-स्कर गृह्य सू० १ । ८ । २१ ॥ ) इति ।

श्रीः

# अथ चतुर्थीहोमकर्मावश्यकत्वे मीमांसा ।

तत्र विवाहाच्चतुर्थेऽहनि रात्रौ चतुर्थीहोमकर्म कुर्यादिति यः सिद्धान्तस्तस्यानेकदेशेष्वनेककुलेषु च लोप एव दृश्यते । कर्म्मलोपत्वात् संस्कारेऽपि भ्रष्टतादिदुर्गुणं भाति ॥ यद्यपि शास्त्रेष्वेवमप्यस्ति । यथा—

मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्र दृशो भवेत् ॥

इति प्रमाणमण्डनवाक्यमनुसृत्य "काललोपो यदि भवेत्कर्म्मलोपं न कारयेत्" इति मत्वा केषाञ्चित्कुले विवाहदिन एव गृहाभ्यन्तरे विवाहमण्डपे वा चतुर्थीहोमकर्म कुर्वन्ति, इत्यपि सामान्य एव पक्षः । उत्तमस्त्वग्रे वक्ष्यमाणप्रमाणानुसार एव भवति । यथाहानेकप्रमाणानि । लघ्वाश्वलायनस्मृतौ विवाहप्रकरणे ( १५ श्लो० ६३ )

विवाहमें चतुर्थी होमकर्म करना परमावश्यक है । इसका विचार इस प्रकार है कि, विवाहके चौथेदिन रात्रिके समय चतुर्थीहोम कर्म करना, यह जो शास्त्रका सिद्धान्त है, इसका लोप अनेक देशों और कुलोंमें देखाजाता है । और कर्म लोप होनेसे संस्कारोंमेंभी भ्रष्टतादि दुर्गुण अनेक देखे जाते हैं । यद्यपि शास्त्रोंमें ऐसा भी कहा है कि-जैसे जिसकर्म करनेके लिये जो काल निश्चित है, यदि उस कालमें किसी कारण वह कर्म नहीं करसके, तो दूसरे ही कालमें उस कर्मको कर लेना. क्योंकि, लाचारीके कारण दूसरा कालभी कर्म करनेमें मुख्यकालके सदृश ही हो जाता है । इस प्रमाणमण्डनवाक्यानुसार तथा " काल लोप यदि हो भी जाय परन्तु कर्मका लोप नहीं करना " इस प्रमाणको मानकर किसी किसीके कुलमें विवाहके दिनही घरके भीतर या विवाह मण्डपहीमें चतुर्थी होमकर्म लोग कर देते हैं । इस प्रकार करनाभी सामान्य पक्ष है । प्रमाणानुसार करनेसे उत्तमपक्ष होता है, और वे प्रमाण इस प्रकार हैं । जैसे—लघुआश्वलायनस्मृति विवाह प्रकरण १५ के ६३ वें श्लोकमें कहा है कि, विवाह होजानेपर वर और वधू ब्रह्मचर्यव्रतसहित नियम

दम्पती नियमेनैव ब्रह्मचर्यव्रतेन तु ।
वैवाहिकगृहे तौ च निवसेतां चतुर्दिनम् ॥ १ ॥
विवाहे चैव निवृत्ते चतुर्थेऽहनि रात्रिषु ।
एकत्वमागता भर्तुः पिण्डे गोत्रे च सूतके ॥२॥ इति भवदेवभट्टधृतमनुः।
चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः ।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत् ॥ ३ ॥ इति बृहस्पतिः॥

हरिहरभाष्ये तथा पारस्करगृह्यसूत्रस्य जयरामकृतभाष्येऽपि तथैव चतुर्थीकर्मणः प्राक् तस्याः (कन्यायाः) भार्यात्वमेव नोत्पन्नम्, विवाहैकदेशत्वाच्चतुर्थीकर्मणः । इति । अतस्तदकरणे विवाहकर्मणः पूर्णता न भवति। इत्यादि वाक्यप्रमाण्याद्विवाहाच्चतुर्थेऽहनि रात्रौ चतुर्थीहोमकर्मावश्यं कर्तव्यममिति सिद्धान्तः ।

इति चतुर्थीकर्ममीमांसा ॥

पूर्वक विवाहके ही घरमें चार दिन ठहरे रहैं। और भवदेवभट्ट धृत मनुका कथन है कि, विवाह निवृत्त होनेपर चौथे दिन रात्रिमें पतिके देह, गोत्र और सूतकमें स्त्रीकी एकता होजाती है। इसी प्रकार बृहस्पतिका बचन है कि, चतुर्थी होमके मन्त्रोंसे त्वचा, मांस और हृदयोंके द्वारा पत्नीका पतिसे संयोग होता है, इसीसे वह पत्नी पतिगोत्रा होजाती है। औरभी हरिहरभाष्यमें तथा पारस्कर गृह्यसूत्रके जयरामकृतभाष्यमें भी ऐसा ही कहा है कि, विवाह कर्म हो जानेपर भी चतुर्थीहोम संस्कार होनेके पहिले कन्यामें भार्यात्वधर्म नहीं उत्पन्न होता. क्योंकि, विवाहसंस्कारका पूरा करनेवाला चतुर्थीहोम एक प्रधान अङ्ग है, इसलिये विना चतुर्थीहोम किये विवाहसंस्कार ही पूर्ण नहीं होता, और पाणिग्रहण करनेवाले पतिकी वह कन्या भार्या नहीं होती ॥ बस, ऊपर लिखे इन प्रमाणोंद्वारा निश्चित:हुआ कि, विवाह होनेके दिनसे चौथेही दिन रात्रिके समय चतुर्थी होम प्रयोग अवश्य करना, यही सिद्धान्त सर्वशास्त्रोंका निश्चय है।

इति बालबोधिनीटीकायां चतुर्थीकर्म मीमांसा ॥

श्रीः ।

# अथ चतुर्थीकर्मप्रयोगः ।

विवाहदिवसाच्चतुर्थदिनस्यापररात्रे गृहाभ्यन्तर एव कार्यम् । तद्यथा—वरो वध्वा सह तैलाद्युद्वर्तनपूर्वकं युगकाष्ठासनोपर्युपविश्य मङ्गलं स्नात्वा अहते शुद्धे वाससी परिधाय गृहं प्रविश्य धृतकुङ्कुमादितिलको वेदिसमीपे शुभासने वरः पूर्वाभिमुख उपविश्य स्वस्य दक्षिणतो ग्रन्थिबन्धनयुतां वधूं चोपवेश्य आचम्य प्राणानायम्य हस्ते पुष्पाक्षतद्रव्याण्यादाय 'ॐ सुमुखश्चैक०' इत्यारभ्य 'विघ्नस्तस्य न जायते । श्रीमन्महागणाधिपतये नमः ध्यायामि' इत्यन्तमुक्त्वा गणपतिस्मरणं कुर्यात् । ततो हस्ते कुशादीन्यादाय प्रतिज्ञासंकल्पं कुर्यात् । ॐ अद्येत्यादिदेशकालौ संकीर्त्य अमुकगोत्र अमुकशर्म्मा मम अस्या भार्य्यायाः सोमगन्धर्वाग्न्युपभुक्तदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहैवदशं चतुर्थीकर्माहं करिष्ये । इति ॥ ( केषांचिन्मतेऽत्र गणपत्यादिदेवतानां पूजनमपि भवति तत्र प्रतिज्ञासंकल्पे विशेषः । यथा-अस्मिन्कर्मणि

अब चतुर्थीहोमप्रयोग लिखते हैं—विवाहदिनसे चौथे दिनकी अर्द्धरात्रि बीत जानेपर घरके भीतरही चतुर्थीकर्म करे अर्थात् पृथक् मण्डपादि नहीं बनावे । वधूसहित वर तैल उबटन आदि शरीरमें लगवाकर दो काष्ठके पीढों पर दोनोंही बैठ मंगलस्नान कर नवीन अहत लक्षणवाले दो दो वस्त्र धारण कर घरके भीतर पूजास्थानमें जाकर वेदीके समीप सुन्दर आसनपर वर पूर्वाभिमुख स्वयं बैठ, अपने दक्षिण गांठ बंधीहुई पत्नीको बैठाय, केसरादिसे अपने तिलक लगाये हुये जलसे ३ आचमन कर, हाथ धोय, प्राणायाम कर, हाथोंमें पुष्प अक्षत और द्रव्य ले गणपतिस्मरण 'ॐ सुमुखश्चै०' से 'ध्यायामि०' पर्यन्तकह पुष्पादि आगे छोडदेवे । पुनः वर हाथमें कुशजलादि ले, देश कालादिका कीर्तनकर, केवल चतुर्थीहोम करने अथवा गणेशादिके स्थापन पूजनसहित जैसा कर्तव्य हो मूलमें लिखे अनुसार वैसाही प्रतिज्ञा

निर्विघ्नताप्राप्तये गणपत्यादिदेवतानामादौ पूजनञ्च करिष्ये। इत्यूह्यः॥) ततो वरवृतिप्रयोगे यथालिखितं गणेशगौरीकलशादिस्थापनपूजनं तथैव वरेण कृत्वा कुशकण्डिकामारभेत्। यदि विवाहमण्डप एव कृतं भवेत्तदा तु पूर्वावाहितानामेव गणेशादीनामावाहनातिरिक्तपूजनं कृत्वा कुशकण्डिकां कुर्यात्। इति॥

अथ कुशकण्डिकारम्भः। तद्यथा—वरः स्वहस्तपरिमितां चतुरस्रां वदीं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवमूलेन वा प्रागग्रप्रादेशमात्रोत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य तत्र तूष्णीं कांस्यपात्रेणाग्निमानीय स्वाभिमुखं ॐ शिखिननामानमग्निं स्थापयामि। इति वेद्यां निदध्यात्। तद्रक्षार्थं किंचिदिन्धनादिकं तत्र नियुज्य ततः पुष्पचन्दनताम्बूलवस्त्राण्यादाय ॐ अस्यां रात्रौ कर्त्तव्यचतुर्थीहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्त्तुम् अमुक-

संकल्प करे।) और इस पुस्तकके वरवृतिप्रयोगमें लिखे अनुसार गणेश, कलश गौरी आदिकोंका यथोचित पूजन करके कुशकंडिका आरम्भ करे। यदि विवाह मण्डपहीमें होवे तो प्रथमहीके स्थापित गणेशादिकोंका पूजन करके कुशकण्डिका करना चाहिये। कुशकण्डिका इस प्रकार करें कि, वर अपने एक हाथकी नपीहुई चौकोनी वेदीको, कुशोंसे परिसमूहन (चारों तरफसे बोहार देना) कर, कुशोंको ईशान दिशामें छोडकर, जलमिले गोवरसे वेदीको लीपके स्फ्य अथवा स्रुवाके मूलसे प्रादेशमात्र पूर्वाग्र उत्तर उत्तर क्रमसे तीन रेखा लिखकर, लिखेहुये इन ३ रेखाओंपरसे अनामिका और अंगुष्ठ द्वारा वही उत्तरोत्तर लेखन क्रमसे मट्टी उठाकर फिर जलसे रेखा वेदीपर अभ्युक्षण करदेवे। ये पञ्चभूसंस्कार कहाते हैं॥ तत्पश्चात् कांस्यपात्र द्वारा कांस्यपात्र ही ढांकेहुये तूष्णीं अग्निको लाकर अपने संमुख वेदीपर 'ॐशिखि०' वाक्य कहकर स्थापित करके अग्निरक्षार्थ कुछ इन्धनादि लगादेवे, तब हाथमें पुष्प चन्दन ताम्बूल और वस्त्रादि ब्रह्मावरणकी सामग्री कुश सहित ले 'ॐ अस्यां०' इत्यादि संकल्प पढके ब्रह्माका वरण करे।

गोत्रम् अमुकशर्माणम् ब्राह्मणम् एभिः पुष्पचन्दनादिभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात्। ॐ वृतोस्मि इति प्रतिवचनम्। यथाविहितं कर्म्म कुरु--इति वरेणोक्ते ॐ करवाणि--इति ब्राह्मणो वदेत्। ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्रह्माणम् अग्निप्रदक्षिणक्रमेण आनीय ॐ अत्र त्वं मे ब्रह्मा भव--इत्यभिधाय ॐ भवानि--इति ब्राह्मणेनोक्ते कल्पितासने उदङ्मुखं ब्रह्माणं उपवेशयेत । ततः पृथूदकपात्रम् अग्नेरुत्तरतः प्रतिष्ठाप्य प्रणीतापात्रं पुरतः । कृत्वा वारिणा सम्यक् परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात्॥ ततः परिस्तरणम्। बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानान्तम् (उत्तराग्रान्) ब्रह्मणोऽग्निपर्यन्तम् (पूर्वाग्रान्) नैर्ऋत्याद्वायव्यान्तम् (उत्तराग्रान्) अग्नितः प्रणीतापर्यन्तम् (पूर्वाग्रान्)। ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयम्

तब ब्रह्मा 'वृतोऽस्मि' कहें, फिर 'यथाविहि०' ऐसा वरके कहनेपर ब्रह्मा 'करवाणि' कहें । तब अग्निसे दक्षिणमें शुद्ध आसन बिछाके, उसपर पूर्वाग्र कुश बिछाकर, ब्रह्माको अग्निके पूर्वसे दक्षिणमें लाकर 'अत्रत्वंमे०' ऐसा कहके, ब्रह्माके 'भवानि' कहनेपर, उक्त आसन पर ब्रह्माको उत्तराभिमुख बैठावे । तब जलसे भरे एक बडे पात्रको अग्निसे उत्तरमें रखके प्रणीतापात्रको आगेकर जलसे भरके, उसके ऊपर कुशोंको बिछाय, ब्रह्माके मुखको देखके अग्निसे उत्तरमें कुशोंपर धर देवे । तब ८१ कुशोंको चारभागकर एक एक भाग क्रमसे वेदीके पूर्वदिशामें अग्निकोणसे ईशानकोणपर्यन्त उत्तराग्र, दक्षिणमें ब्रह्मासे अग्निपर्यन्त पूर्वाग्र, पश्चिममें नैर्ऋत्यकोणसे वायुकोणतक उत्तराग्र और उत्तरमें अग्निसे प्रणीतापर्यन्त पूर्वाग्र, इस प्रकार कुशोंका चारोंभाग वेदीके चारोंतरफ परिस्तरण करे । तदनन्तर अग्निसे उत्तरमें पश्चिमदिशाके तरफसे इस प्रकार पात्रासादन आरम्भ करे । पवित्र छेदनार्थ तीन कुश, एक कुशमेंसे

प्रोक्षणीपात्रम् आज्यस्थाली चरुस्थाली स्रुवसंमार्जनार्थं कुशत्रयम् उपग्रहार्थं वेणीरूपं कुशत्रयम् प्रादेशमितपलाशसमित्त्रयम् स्रुवः आज्यम् स्थालीपाकार्थं तण्डुलम् दुग्धश्च ब्रह्मदक्षिणार्थं षट्पञ्चाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रम् एतानि पवित्रच्छेदनकुशानाम् पूर्वपूर्वदिशि क्रमेणासादनीयानि । स्थालीपाकाय तण्डुलानाम् आसादनम्, चरुपात्रस्य च । ततः पवित्रच्छेदनकुशैः पवित्रे प्रादेशमिते प्रमाप्य छिन्द्यात् । तानपास्य पवित्राभ्यां प्रणीतोदकं उत्पूय सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय उदगग्रे पवित्रे व्यस्तहस्तयोरंगुष्ठानामिकाभ्यां आदाय तन्मध्येन प्रोक्षण्युदकं भूमौ त्रिः क्षिप्त्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्तानामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किञ्चित्

बीचोंबीचके दो पत्ते जिनके बीचका कोई पत्र रह नहीं गया हो. प्रोक्षणीपात्र आज्यस्थाली, चरुस्थाली, स्रुव, संमार्जनार्थ तीन कुश, उपग्रहके लिये वेणीरूप तीन कुश, प्रादेशमात्रके तीन समिधा, स्रुवा, घृत, खीर बनानेको चावल दुग्ध, ब्रह्माके दक्षिणार्थ वरकी दोसो छप्पन मुट्ठी चावलोंसे भरा पूर्णपात्र, इन सभोंको पवित्रच्छेदन कुशके पूर्वपूर्व क्रमसे धरे और स्थालीपाकके लिये चावल धरे । एवं चरुपात्रकोभी धरदेवे । फिर पवित्रच्छेदन तीन कुशोंसे पवित्रकवाले दो कुश पत्रोंको प्रादेशमात्र चोटीके तरफसे बराबर कर नापके काटदेवे और प्रादेशमात्रके कटे दो कुशपत्रोंको रखकर बाकी कटे और काटनेवाले कुशोंको ईशानदिशाकी तरफ फेंकदेवे । फिर दोनों पवित्रोंद्वारा प्रणीताके जलको ऊपरके तरफ तीन बार उछालके पुनः पवित्रसहित दक्षिण हाथसे प्रणीताके जलको तीन बार प्रोक्षणी पात्रमें छोडदेना । तब दोनों हाथकी अलग अलग अनामिका और अंगुष्ठद्वारा उत्तराग्र पवित्रकके दोनों छोरोंको पकडकर पवित्रकके बीच भागसे प्रोक्षणीका जल तीन बार पृथ्वीपर छिडकके, पवित्रोंको प्रोक्षणीपात्रमें रखदेवे और प्रोक्षणीपात्रको दहिने हाथसे उठाकर बांयें हाथमें रख, दक्षिण हाथके अनामिका और अंगुष्ठसे प्रोक्षणीके

उर्द्धं उत्क्षिप्य प्रणीताजलेन प्रोक्षणीमभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत्प्रोक्ष्य पवित्रशेषजलसहितपात्रम् अग्निप्रणीतयोर्मध्ये निधाय आज्यस्थाल्याम् आज्यं निरूप्य चरुस्थाल्यां तण्डुलान्निःक्षिप्य पृथूदकपात्राज्जलमानीय तेन तण्डुलान् त्रिः प्रक्षाल्य तत्र प्रणीतोदकम दुग्धञ्च प्रक्षिप्य स्वयं चरुम् ब्रह्मणा च आज्यम् गृहीत्वा प्रदक्षिणीकृत्य अग्निपूर्वेण नीत्वा दक्षिणत आज्यम् उत्तरतः पायसं चरुम् श्रपणार्थम् युगपत् अग्नौ निधाय । उल्मुकं सहविष्काग्नेः प्रदक्षिणम भ्रामयित्वा अग्नौ क्षिपेत् । ततः स्रुवम अवाङ्मुखम् अग्नौ त्रिः प्रतप्य उत्तानम् स्रुवम् संमार्जनकुशैः अग्रैरन्तरतो मूलैर्बाह्यतः संमार्ज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य स्वस्य दक्षिणतः कुशोपरि निदध्यात् । ततः पाके वृत्ते स्वयम आज्यम् उद्वास्य चरोः प्रदक्षिणं कारयित्वा पूर्वे

कुछ जलको ऊपरके तरफ छिडके। फिर प्रणीताके जलसे प्रोक्षणीको सींचकर, पुनः प्रोक्षणीके जलसे पवित्रोंद्वारा स्थापन क्रमसे आज्यस्थाली आदि हर एक वस्तुको एक एक वार सभीको सेचित करके, अग्नि और प्रणीताके बीच असंचर स्थानमें प्रोक्षणीपात्रको रख देवे, तब आज्यस्थालीमें घृत छोडदेवे और चरुस्थालीमें खीर बनानेवाला चावल छोडकर पृथूदक पात्रमेंसे जल ले चावलोंको तीनवार सुन्दर धोयकर, फिर इसमें प्रणीतामेंसे जल और दूध जो अलग धरा है खीर पकनेके अंदाजसे छोडदेवे । तत्पश्चात् चारुपात्रको वर और आज्यस्थालीको ब्रह्मा उठाकर अग्निके पूर्वसे घुमातेहुये दोनों एकसाथहीं अग्निपर दक्षिणभागमें घृत और घृतसे उत्तरमें चरु पकनेको धरदेवे । फिर जलतेहुये कुशोंको पकतेहुये घृत और चरु दोनोंहीके ऊपर एकसाथ प्रदक्षिण घुमाकर अग्निमें जलतेहुये कुशोंको छोडदेवे। तत्पश्चात् स्रुवाका मुख नीचेकर अग्निमें तीनवार तपावे, फिर स्रुवाका ऊपर मुख करके संमार्जन कुशोंके अग्रभागसे भीतर और मूलसे वाहर स्रुवाका संमार्जन करके, प्रणीताके जलसे स्रुवाका अभ्युक्षण कर पुनः अग्निपर तीनबार तपाय, अपने दक्षिणभागमें कुशोंपर स्रुवाको धर देवे। फिर खीर और घृत ठीक पकजाने

णानीय अग्निपश्चिमे प्रणीतोत्तरतः निधाय ततः पायसचरुम् उद्वास्य आज्यपश्चिमेन नीत्वा आज्यस्योत्तरतो निधाय प्रोक्षणीतः पवित्रे समानीय आज्ये प्रोक्षणीवदुत्पवनम् । पवित्रे प्रोक्षण्यां निधाय आज्यम् अवेक्ष्य सति अपद्रव्ये तन्निरस्य प्रोक्षणीत्रिरुत्पवनं विधाय । उपयमनकुशान् वामहस्तेनादाय उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा घृताक्ताः समिधस्तिस्रः तूष्णीं अग्नौ क्षिपेत् ॥ ततः उपविश्य सपवित्रहस्तेन प्रोक्षणीजलेन प्रदक्षिणक्रमेण अग्निं पर्य्युक्ष्य पवित्रे प्रोक्षणीपात्रे धृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ तत्राघारादारभ्य आहुतिचतुष्टये तत्तदाहुत्यनन्तरं स्रुवावस्थितघृतशेषं प्रोक्षण्यां क्षिपेत् । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ( इति मनसा ) ॥ १ ॥ ॐ इन्द्राय

पर वर आज्यस्थालीको उतार चरुके बांयेंतरफसे पूर्वतरफ घुमाय अग्निके पश्चिमसे लाकर प्रणीताके उत्तरभागमें धरदेवे । पुनः पायस चरुकोभी उतार आज्यस्थालीके पश्चिम तरफसे घुमाताहुआ लेजाकर घृतके उत्तरभागमें धर देवे । प्रोक्षणीपात्रसे पवित्रक उठाय उसके द्वारा आज्यस्थाली घृतको तीनवार ऊपरके तरफ उछाल, फिर प्रोक्षणीमें पवित्रक रख, घृतको देखें. उसमें अन्यवस्तु हो तो उसको निकाल देवे । फिर प्रोक्षणीके जलको तीनवार उत्पवन कर, वेणीरूप उपयमनकुशोंको बायें हाथमें ले खडाहो प्रजापतिका मनसे ध्यान करता हुआ, घृतमें डुबोई तीन समिधा, मौन हो एक एक करके अग्निमें छोड देवे । फिर बैठ, पवित्रसहित दक्षिणहस्त द्वारा प्रोक्षणीके जलको अग्निके चारों तरफ गिराता हुआ घुमाकर, प्रोक्षणीमें पवित्रक धरदेवे । फिर कुशद्वारा ब्रह्मासे अन्वारब्ध हुआ वर दहिने पांवके घोंटूको भूमिमें लगाये हुये, खूब जलते हुये अग्निमें स्रुवाद्वारा घृतकी आघारादि आहुति देवे । पहिली चार आहुतियोंमें स्रुवाके शेषघृतबिन्दुको प्रोक्षणीपात्रमें गिराता जावे और सर्वत्र त्यागवाक्य वर स्वयं बोले । विना बोले मनहीमें वाक्य कहकर प्रजापतिकी पहिली आहुति देवे । यह 'ॐ प्रजापतये' से

स्वाहा । इदमिन्द्राय न मम ॥ २ ॥ इत्याघारौ ॥ ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ३ ॥ ॐ सोमाय स्वाहा । इदं सोमाय न मम ॥४॥ इत्याज्यभागौ । तत आज्याहुतिपञ्चतये स्थालीपाकाहुतौ च प्रत्याहुत्यनन्तरं स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ ततो ब्रह्मणान्वारम्भं विना ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । इदमग्नये न मम ॥ १ ॥ ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं वायवे न मम ॥ २ ॥ ॐ सूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यैनाशयस्वाहा इदं सूर्याय न मम ॥ ३ ॥ ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं चन्द्राय न मम ॥ ४ ॥ ॐ गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गन्धर्वाय न मम ॥५॥ ततो घृताऽभिघारितस्थालीपाकेन स्रुवाद्वारा ब्राह्मणाऽन्वारब्धो जुहुयात् । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ ६ ॥ ( इति मनसा ) इति हुतशेषस्य स्रुवाऽवस्थितचरोः घृतस्य च

दो आघार और ' ॐ अग्नये० ' से दो आज्यभाग चारों आहुतियोंके देने बाद आगेकी ॐ अग्नेप्रायश्चित्ते०' इत्यादि पांच घृतकी आहुति ब्रह्माके अन्वारब्ध विनाही देवे । परञ्च स्रुवामें बचे घृतबिन्दुओंको इन पांचों आहुतियोंमें प्रत्येकके अन्तमें प्रोक्षणीमें छोडता जावे पुनः कुशोंद्वारा ब्रह्माका स्पर्श कियेहुये वर आगे कही सब आहुति देवे । घृत मिले हुये चरुको स्रुवामें ले, मनमें 'ॐ प्रजापतये०' इस वाक्यको कहकर प्रजापतिकी छठवीं एक आहुति अग्निमें

प्रोक्षणीपात्रे प्रक्षेपः। अतोऽग्रे आहुतिनवके हुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः। अयमपि होमो ब्रह्मणान्वारब्धकर्तृकः। तत आज्यस्थालीपाकाभ्यां स्विष्टकृद्धोमः। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम ॥ १ ॥ तत आज्येन ॐ भूः स्वाहा। इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा। इदं वायवे न मम ॥ २ ॥ ॐ स्वः स्वाहा। इदं सूर्याय न मम ॥ ३ ॥ एता महाव्याहृतयः ॐ त्वन्नोऽअग्ने वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः। यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांᳯसिप्रमुमुग्ध्यस्मत्स्वाहा (य० अ० २१ मंत्र ३)। इदमग्नीवरुणाभ्यां न मम ॥ १ ॥ ॐ सत्वन्नोऽअग्नेऽवमो भवोतीनेदिष्ठोअस्याऽउषसोव्युष्टौ। अवयक्ष्वनोवरुणᳬ रराणोवीहिमृडीकᳬसुहवोनऽएधिस्वाहा (य० अ० २१ मं० ४)। इदमग्नये न मम ॥ २ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमया असि। अयानोयज्ञं वहास्ययानो धेहि भेषजᳯस्वाहा। इदमग्नये न मम ॥ ३ ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ४ ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमᳯश्रथाय। अथावयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा (य० अ० १२ मन्त्र १२)। इदं वरुणाय न मम ॥ ५ ॥ एताः सर्वप्रायश्चित्तसंज्ञका आहुतयः।

छोड़देवे और इस आहुतिके बचे हुये चरु तथा घृतका प्रोक्षणीमें छोड़ देवे ॥ तदनन्दर आज्य और चरु दोनोंसे 'ॐ अग्नये स्वि०' इससे स्विष्टकृत आहुति करे। तत्पश्चात् तीन व्याहृति और पांच सर्वप्रायश्चित्तकी ये सब आठ और

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ १ ॥ इति मनसा । इदं प्राजापत्यम् । इति नवाहुतयः । ततः संस्रवं प्राश्य आचम्य ब्रह्मणे पूर्णपात्रं दद्यात् । ॐ अस्यां रात्रौ कृतैतच्चतुर्थीहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थम् इदं पूर्णपात्रं प्रजापतिदैवतम् अमुकगोत्राय अमुकशर्म्मणे ब्राह्मणाय पूर्णपात्रदक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॐ स्वस्ति इति प्रतिवचनम् । ततो ब्रह्मग्रन्थिविमोकः । ततः ॐ सुमित्रिया नऽआप ऽओषधयः सन्तु । इति पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य । ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्मः । ( य० अ० ३८ मंत्र २३ ) इत्यैशान्यां दिशि प्रणीतां न्युब्जीकुर्यात् । ततः स्तरणक्रमेण बर्हिः उत्थाप्य घृताक्तं कृत्वा हस्तेनैव जुहुयात् । ॐ देवागातुविदोगातुंवित्वागातुमित । मनसस्पतऽइमन्देवयज्ञꣳ स्वाहा वातेधाः स्वाहा ( य० अ० ८ मं० २१ ) इदं वाताय न मम ॥ ततः पृथूदकपात्रस्थजलमादाय आम्रपल्लवेन

एक प्रजापतिके लिये. ये नौ आहुति घृतसे करके स्रुवावस्थित हुतशेष घृतबिन्दु प्रोक्षणीमें गिराता जावे ॥ तदनन्तर संस्रवप्राशन कर, हाथ धो, आचमन करके, हाथमें कुश जल सहित पूर्णपात्र ले ' ॐ अस्यां रात्रौ० ' इत्यादि पढ ब्रह्माको दक्षिणा पूर्णपात्र देवे । और ब्रह्मा 'ॐ स्वस्ति' कहकर स्वीकार करलेवे । फिर ब्रह्मग्रंथि खोलकर 'ॐ सुमित्रियान० ' मन्त्र पढके पवित्रोंद्वारा प्रणीताके जलका शिरपर मार्जन करके शेष जल सहित प्रणीताको ' ॐ दुर्मित्रिया०' मन्त्र पढ ईशानकोणमें औंधा कर देवे । फिर स्तरण किये क्रमसे कुशोंको उठाय, घी लगाय खडे होकर ' ॐ देवागातु० ' मन्त्र पढ हाथसेही होम करदेवे । तत्पश्चात् पृथूदकपात्रमेंसे जल ले आमके पत्तोंद्वारा वर अपनी

मूर्ध्नि वरः वधूम् अभिषिञ्चति । तत्र मन्त्रः–ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नी तत एनां करोमि सा जीर्यत्वं मया सह श्री अमुकी देवी । ( अत्र वधूनामोच्चारणं प्रथमान्तं वरेण कर्तव्यम् यथा गङ्गादेवी इति ) ततो वधूं स्थालीपाकं प्राशयति वरः–ॐ प्राणैस्ते प्राणान्सन्दधामि १ ॥ ॐ अस्थिभिस्ते अस्थीनि सन्दधामि २ ॥ ॐ मांसैस्ते मांसानि सन्दधामि ३ ॥ ॐ त्वचा ते त्वच७ सन्दधामि ४ ॥ इति मन्त्रचतुष्टयेन प्रतिमन्त्रान्तेऽन्नम् प्राशयेत् । ततो वधूहृदयं स्पृशन् वरः पठेत्–ॐ यत्तेसुशीमेहृदयंदिविचन्द्रमसिश्रितम् । वेदाहंतन्मां तद्विद्यात् पश्येम शरदः शतं जीवेमशरदः शत७७शृणुयामशरदः शतम् इति ॥ अथ कङ्कणमोक्षणादीनि तथा ब्रह्मग्रन्थिविमोकादीनि च आचारप्राप्तानि कुर्यात् । कङ्कणमोचने मन्त्रः

कङ्कणं मोचयाम्यद्य रक्षां वै न कदाचन ।
मयि रक्षां स्थिरां दत्वा स्वस्थानं गच्छ कङ्कण ॥

ततः उत्थाय वधूदक्षिणहस्तस्पृष्टस्रुवेण घृतफलपुष्पपूर्णेन पूर्णाहुतिं कुर्यात्–ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् । कविᳬ सम्म्राजमतिथिञ्जनानामासन्नापात्रञ्ज–

वधूके शिरपर 'ॐ यातेपति०' मन्त्र पढके अभिषेक करे और मन्त्रके, अन्तमें वधूका देवीशब्दान्त नामोचारण करे। विधानसे भिन्न प्रसंगमें पत्नीका नाम लेना निषिद्ध है । फिर होमसे शेष बचे चरुमेंसे चार ग्रास 'ॐप्राणैस्ते०' इत्यादि चार मन्त्रोंसे वर अपने ही हाथसे पत्नीको खिलावे फिर वधूके हृदयका स्पर्श कियेहुये 'ॐ यत्तेसुशीमे०' मन्त्रको पढे । फिर 'कंकणं मो०' इस मन्त्रको पढके प्रथम बांधे कङ्कणका मोचन करे । औरभी कुलाचार प्राप्त कर्मोंको करके तब फल, पुष्प और घृतसे भरे हुये स्रुवाको वधूके दहिने हाथसे स्पर्श कराये हुये लेकर, वधूसहित खडे होकर 'ॐ मूर्द्धानं०' मन्त्रसे पूर्णाहुति करके अपने अपने स्थानोंपर बैठ जावें ।

नयन्तदेवाः स्वाहा । ( य० अ० ३३ मन्त्र ८ ) इति मंत्रेण पूर्णाहुतिः । ततः उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ॐ त्र्यायुषंजमदग्नेः इति ललाटे । ॐ कश्यपस्यत्र्यायुषम् । इति ग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषम् । इति दक्षिणबाहुमूले । ॐ तन्नोअस्तुत्र्यायुषम ॥ इति हृदये । ( य० अ० ३ मन्त्र ६२ ) एवं वध्वा अपि त्र्यायुषं कुर्यात् । तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः । तत आचार्याय वरां दक्षिणां दद्यात् । यथा—ॐ अद्यकृतैतच्चतुर्थीहोमकर्मपूर्णताप्राप्तये यथाशक्ति दक्षिणां अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति ॥ भूयसीं दक्षिणाञ्च दद्यात् । यथा—अस्मिन् चतुर्थीहोमकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च दातुमहमुत्सृजे । इति ॥ ततो हस्ते जलं गृहीत्वा अनेन चतुर्थीहोमकर्मणा कर्माङ्गदेवता प्रजापतिः प्रीयतां न मम । इति जलमुत्सृजेत् । ततो यदा गृहाभ्यन्तरे गणपत्याद्यावाहनादिकं कृतश्चेत्तदा हस्तेऽक्षतान् गृहीत्वा—

ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ।
इष्टकामार्थसिद्ध्यर्थं पुनरागमनाय च ॥

तदनन्तर स्रुवाद्वारा होमका भस्म लेके दहिने हाथकी अनामिका अंगुलीके अग्रभागसे भस्मको 'ओंत्र्यायुषं०' से ललाटमें, 'ओं कश्यप०' से कण्ठमें, 'ओं यद्देवे०' से दहिने कन्धेमें 'ओं तन्नोअस्तु०' से हृदयमें लगावे । इसी क्रमसे वधूके ललाटादिमें भी 'भस्म लगावे, तब 'तन्नो' के स्थानमें 'तत्ते' ऐसा कहे । फिर हाथमें कुशजलादि ले 'ओं अद्य कृ०' इत्यादि कह आचार्य को दक्षिणा देवे, और लोगोंको भी भूयसी दक्षिणा 'अस्मिन् च०' इत्यादि कहकर संकल्प करके बांट देवे । फिर हाथमें जल ले 'अनेन चतु०' इस वाक्यको कहकर जल छोड देवे । यदि मण्डपसे भिन्न स्थानमें घरके भीतर

भो गणपत्याद्यत्रावाहिता देवाः स्वस्थानं गच्छन्तु । इत्यक्षतान् प्रक्षिपेत् ॥ अथवा विवाहमण्डपे एव कृतं तदा तु गणेशादिविसर्जनं न कर्तव्यम् । इति ॥ अथ प्रार्थना-

यस्य स्मृत्या च नामोक्त्या व्रतपूजाक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १ ॥

कर्मसम्पूर्णकामः विष्णुं स्मरेत् श्रीविष्णुः श्रीविष्णुः श्रीविष्णुः ॥ तत उत्तिष्ठेयाताम् ॥ इति ॥

इति श्रीचिकित्सकचूडामणि पं० ठाकुरप्रसादमणित्रिपाठि-
विरचितविवाहसोपाङ्गविधौ चतुर्थीहोमकर्मप्रयोगः ॥

## अथ मण्डपोद्वासनम् ।

तत्रादौ मुहूर्तविचारः—"युग्मे वस्रे षष्ठहीने च पञ्चसप्ताहे स्यान्मण्डपोद्वासनं सत्" इति मुहूर्तचिन्तामणौ । अथ मण्डपोद्वासनप्रयोगः—एवं विचारिते ज्योतिःशास्त्रोक्तमण्डपोद्वासनशुभमुहूर्त्तदिने वरपिता कन्यापिता च स्वस्वगृहे सुस्नातः शुद्धे वाससी परिधाय कृतनित्यक्रियः मण्डपाभ्यन्तरे पूर्वस्थापित·

चतुर्थी कर्म होनेमें कलश गणेशादिका स्थापन किया हो तो हाथमें अक्षत ले 'ओं यान्तु दे०' इत्यादि पढ सबोंपर अक्षत छिडककर विसर्जन करदेवे । यदि मण्डपमें हुआ हो तो इस समय विसर्जन नहीं होगा ॥ फिर हाथ जोड 'ओं यस्य०' इस मन्त्रको पढ 'श्रीविष्णुः ३' ऐसा स्मरणकर पूजास्थानसे वर वधू उठें ॥

इति बालबोधिनीटीकायां चतुर्थीहोमप्रयोगः ॥

**मण्डपोद्वासनप्रयोग**-इसके करनेका शुभदिन मुहूर्तचिन्तामणिमें कहा है कि विवाहके दिनसे छठवां दिन छोडके बाकी सम दिनोंमें तथा विषममें केवल पांचवें और सातवेंही दिन ज्योतिःशास्त्रके अनुसार शुभ मुहूर्त होनेसे देवताओं का उत्तर पूजन कर विसर्जन और मण्डपका उद्वासन इस प्रकार करै कि, वर का पिता तथा कन्याका पिता अपने अपने घरोंमें स्नान कर, पवित्र वस्रके

गणेशकलशादिसन्निधौ शुभासने पूर्वाभिमुख उपविश्य स्वदक्षिणतो ग्रन्थिबन्धनयुतां पत्नीञ्चोपवेश्य तथा वरपिता पुत्रम् ( वधूप्रवेशे संजाते पुत्रदक्षिणे पुत्रेण ग्रन्थिबन्धनयुतां वधूमपि ) ' कन्यापिताऽपि वरगृहं न गता कन्या चेत् तदा कन्यामपि , पत्न्या दक्षिणे उपवेश्य । तत आचम्य ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु ॥ इति पत्न्यादिसहितमात्मानं पूजासंभारांश्च कुशजलैरासिञ्चेत् । ततो हस्ते द्रव्याक्षतपुष्पाण्यादाय—

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेत् शृणुयादपि ॥ २ ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥
वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ४ ॥

जोडे पहिन नित्यकृत्यसे निवृत्त हो मण्डपमें आय पूर्वस्थापित गणेशादिके समीप आसनपर स्वयं पूर्वाभिमुख बैठ अपने दहिने वस्त्राभूषणोंसे सुसज्जित गांठ बंधी हुई पत्नीको और पत्नीके दहिने वरपिता पुत्रको ( यदि वधू प्रवेश हुआ हो तो, पुत्रसे दहिने गांठ बंधी हुई वधूकोभी ) बैठावे ॥ और कन्यापिताभी इसी प्रकार अपने घरके मण्डपमें जाय आसनपर पूर्वाभिमुख सपत्नीक बैठ, यदि कन्या वरगृह नहीं गई, हो तो उससेभी माताके दहिने बैठावे ॥ तत्पश्चात्, जलसे स्वयं तीन आचमन कर 'ॐ अपवित्रः ' इत्यादि कह कुश द्वारा पूजनकी सामग्री और पत्न्यादिसहित अपने सब लोगोंपर जल छिडके । पुनः हाथोंमें द्रव्य, अक्षत और पुष्प ले ' ॐ सुमुखश्चैक० ' इन श्लोकादि-

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यंबिके गौरि नारायणि नमोस्तु ते ॥ ५ ॥

श्रीमन्महागणाधिपतये नमः सर्वेभ्यो देवेभ्यो नमः । इति पुष्पादिकं गणेशाग्रे क्षिप्त्वा कुशजलान्यादाय ॐ विष्णुर्विष्णुर्विष्णुः मासादिकमुच्चार्य अमुकगोत्रः अमुकशर्म्मा ( वरपिता ) अमुकगोत्रस्य मम पुत्रस्य अमुकशर्मणः ( कन्यापिता ) अमुकगोत्रोत्पन्नायाः मम अमुकी कन्यायाः विवाहाङ्गभूतमण्डपोद्वासनकर्मणि विवाहाङ्गभूतकर्माभ्यन्तरे गणपत्याद्यावाहितानां समस्तदेवानां यथोपस्थितोपचारैः उत्तरपूजनपूर्वकं सर्वेषां विसर्जनम् तथा मण्डपोद्वासनञ्च कर्माहं करिष्ये इति ॥ ततो यजमानः यथायथास्थाने पूर्वस्थापितान् गणपत्यादिसर्वदेवान् तथा मातृकादींश्च नाममन्त्रैः यथावकाशं पृथक् पृथक् खण्डशो वा अथवा एकतन्त्रेण सर्वेषामुत्तरपूजनं कुर्यात् । पूजनं यथा--स्नानीयम् जलम् समर्पयामि । चन्दनाद्यनुलेपनं समर्पयामि । गौर्यादिभ्यो नमः सिन्दूरादिमङ्गलद्रव्याणि समर्पयामि । अक्षतान् समर्पयामि । पुष्पाणि माल्यानि च समर्पयामि । दूर्वाङ्कुरान् गणपतये नमः समर्पयामि । धूपम् आघ्रापयामि । दीपम् दर्शयामि । ( हस्तौ प्रक्षाल्य ) नैवेद्यं यथा भागं विभज्य निवेदयामि । मध्ये पानीयम् उत्तरापोशनम् हस्तप्रक्षाल-

कोंको पढ पुष्पादि गणेशपर छोडदेवे । फिर हाथमें कुशजलादि लेकर ' ॐ विष्णुः० ' इत्यादि मासादिकोंका उच्चारण कर वरपिता, तथा कन्यापिताके पृथक् पृथक् संकल्पमें कहे वाक्योंको कहकर प्रतिज्ञा संकल्प करे । तत्पश्चात् यजमान जिन जिन स्थानोंमें पहिले गणेशादि देवताओं तथा मातृकाओंका स्थापन पूजनादि किया है और विसर्जन नहीं हुआ है, उन सबोंका यथावकाश अलग अलग वा खण्ड खण्ड अथवा एकही तन्त्रमें नाम मन्त्रों द्वारा जैसा मूलमें लिखा है सर्व्वोपचार द्वारा अथवा

नीयम् मुखप्रक्षालनीयं जलम् समर्पयामि । ताम्बूलानि पूगीफलानि समर्पयामि । दक्षिणां यथाभागं विभज्य समर्पयामि । एवं संपूजयेत् ॥

अथ पूर्वावाहितानां महागणपत्यादीनाम् आवाहनक्रमेण नामानि लिख्यन्ते । यथा—गणेशपिण्डे—ॐ श्रीमन्महागणाधिपतये नमः ॥ गोमयनिर्मितायाम् गौर्याम्—ॐ श्रीगौर्यै नमः ॥ मङ्गलकलशे—ॐ मङ्गलकलशाधिष्ठिताय गङ्गादितीर्थसहिताय अपांपतये वरुणाय नमः ॥ कलशसमीपे नवकोष्ठात्मके पीठे पर्णपुटे वा—ॐ अधिप्रत्यधिदेवसहितेभ्यो सूर्यादिनवग्रहेभ्यो नमः ॥ मण्डपभूमौ—ॐ यज्ञमण्डपभूम्यै नमः ॥ मण्डपस्थले- ॐ ब्राह्मयादिस्थलमातृकाभ्यो नमः ॥ मण्डपे—ॐ नन्दिन्यादिमण्डपमातृकाभ्यो नमः ॥ मण्डपे अवलम्बितासु तृणनिर्मितासु पञ्चपिञ्जुलिकासु—ॐ वासिष्ठ्यादितृणमातृकाभ्यो नमः ॥ आम्रपल्लवादिनिर्मिते मण्डपादौ परिलंबिते तोरणे--ॐ धातृविधातृतोरणमातृकाभ्यां नमः ॥ ततो द्वारस्य दक्षिणे वामे च पार्श्वे भित्तौ—ॐ लक्ष्म्यादिद्वारमातृकाभ्यो नमः ॥ ततो गृहाभ्यन्तरे भित्तौ—ॐ गणेशेनाधिकाभ्यो गौर्यादिषोडशमातृकाभ्यो नमः ॥ तत्रैव षोडशमातृकासमीपभित्तौ—ॐ श्रीआदिघृतमातृकाभ्यो नमः ॥ ॐ दुर्गायै नमः । ॐ कीर्त्यादिगृहमातृकाभ्यो नमः । ॐ मोदादिविघ्नमातृकाभ्यो नमः । ॐ मत्स्यादिजलमातृकाभ्यो नमः । ॐ क्षमादिआभ्यन्तरमातृकाभ्यो नमः । ततो भाण्डेषु निमन्त्रितस्वकुलदेवादीनाम् । प्रथमभाण्डे—ॐ स्वकुलदेवादिभ्यो निमन्त्रितेभ्योनमः ॥ द्वितीयभाण्डे—ॐ कल्याण्यादिचराचरभूतान्तेभ्यो निमन्त्रितेभ्योनमः ॥ तृतीयभाण्डे—ॐ समस्तपितृभ्यो निमन्त्रितेभ्यो नमः । एतैर्नाममन्त्रैः सम्पूज्य कर्पूरनीराजनं कुर्यात् ।

तत्र मन्त्रः—कदलीगर्भसम्भूतकर्पूरञ्च प्रदीपितम् ।
आरार्तिकमहं कुर्वे प्रीयन्तां सर्वदेवताः ॥

ॐ सर्वेभ्योऽत्र पूजितेभ्यो कर्पूरनीराजनं समर्पयामि ।

ततो हस्ताभ्यां पुष्पाण्यादाय—

नानासुगन्धपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तो गृह्यन्तां सर्वदेवताः ।

ॐ सर्वेभ्योऽत्र गणपत्यादिपूजितेभ्यो देवेभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि । ततो हस्ते जलमादाय ॐ अनया उत्तरपूजया श्रीमन्महागणपत्यादिसर्वे देवाः देव्यादयश्च प्रीयन्तां न मम । इति जलमुत्सृज्य प्रार्थयेत् ।

मन्त्रतन्त्रक्रियाहीनं विधिहीनञ्च यत्कृतम् ।
क्षम्यन्तां तत्तु भो देवाः प्रसीदन्तु ममोपरि ॥ १ ॥

भो गणपत्यादिदेवताः मम सकुटुम्बस्य आयुष्कर्तारःक्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः पुष्टिकर्तारस्तुष्टिकर्तारो वरदातारो भवत । इति । ततो हस्तेऽक्षतानादाय विसर्जनमन्त्रान् पठित्वा सर्वत्रैवाक्षतान् प्रक्षिप्य गणपत्यादिकान् विसृजेत् । तत्र मन्त्राः—ॐ यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांय्योनिङ्गच्छस्वाहा । एषतेयज्ञोयज्ञपतेसहसूक्तवाकः सर्व्ववीरस्तञ्जुषस्वस्वाहा ( य० अ० ८ मंत्र २२ )

ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ।
इष्टकामार्थसिद्ध्यर्थं पुनरागमनाय च ॥

ॐ गणपतिसहिताः समस्तमातरः क्षमध्वम् । भो विवाहाङ्गभूतसर्वकर्मण्यावाहिताः गणपत्यादयो देवाः स्वस्थानं गच्छन्तु

पञ्चोपचारसे उत्तर पूजन करके अन्तमें प्रार्थना 'मन्त्रतन्त्र०' इत्यादिसे वरदातारो भवत' पर्यंत पूरा करे । फिर हाथमें अक्षतको ले 'ॐ यज्ञयज्ञं०' से 'स्वस्थानं गच्छन्तु' पर्यन्त पढ सभी देवस्थानोंमें अक्षतोंका प्रक्षेपण करता हुआ,

इति ॥ ततो हस्ते जलमादाय ॐ अनेन सर्वाङ्गपूर्णब्राह्मविधिना कृत ( वरपिता ) मम पुत्रस्य ( कन्यापिता ) मम कन्यायाः विवाहकर्मणा कर्माङ्गदेवता श्रीभगवान् प्रजापतिः प्रीयतां न मम । इति जलमुत्सृज्य हस्ते द्रव्याक्षतकुशादीन्यादाय—ॐअद्य पूर्व्वोच्चारितशुभदिने अमुकगोत्रः अमुकशर्म्मा मम ( वरपिता ) अमुकनामपुत्रस्य ( कन्यापिता ) अमुकीकन्याया विवाहाङ्गभूतमण्डपोद्वासनकर्मणः पूर्णतासिद्धयर्थं यथाशक्ति दक्षिणां अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति दक्षिणां दद्यात् । ततो ब्राह्मणः " स्वस्ति " इत्युक्त्वा दक्षिणां स्वीकृत्य यजमानललाटे तिलकं कुर्यात् । तत्र मन्त्रौ—ॐ युञ्जन्तिब्ब्रध्नमरुषञ्चरन्तंपरितस्त्थुषः । रोचन्तेरोचनादिवि ॥ १ ॥ युञ्जन्त्यस्यकाम्म्याहरीव्विपक्षसारथे । शोणाधृष्ष्णूनृवाहसा ॥ २ ॥ ( य० अ० २३ मंत्र ५, ६ ) ततो यजमानः प्रार्थयेत्—

ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

कर्मसंपूर्णकामो विष्णुं स्मरेत् । श्रीविष्णुः श्रीविष्णुः श्रीविष्णुः ।

महागणपत्यादि सभी देवदेवियोंको विसर्जन करदेवे । तदनन्तर हाथमें जल ले 'ॐ अनेन सर्वाङ्ग' इत्यादि वाक्यमें ( वरपिता "मम पुत्रस्य" ) और ( कन्यापिता "मम कन्यायाः" ) ऐसे कहतेहुये 'प्रीयन्तां न मम' पर्यन्त वाक्य पूरा कह पृथ्वीपर जल छोड देवे ॥ पुनः हाथमें द्रव्य कुशादि लेकर 'ॐ अद्य०' इत्यादि वरपिता तथा कन्यापिता अपने अपने कहनेके अनुसार मूलमेंसे वाक्य कह गोत्रादिकोंका उच्चारण करताहुआ 'संप्रददे' पर्यन्त संकल्प कर ब्राह्मणको दक्षिणा देवे और ब्राह्मण ' स्वस्ति ' ऐसा कह दक्षिणा ले यजमानके मस्तकमें 'ॐ युञ्जन्ति०' इन दो मन्त्रोंको पढताहुआ तिलक लगादेवे । तत्पश्चात् यजमान 'ॐ प्रमादा०' से 'श्रीविष्णुः ३' पर्यन्त

इति ॥ ततो द्रव्यादिभिर्नापितादीन् संतोष्य स्त्रिया ग्रन्थिविमोकं कृत्वा आसनात् पत्न्यादिभिः सहित उत्तिष्ठत् । इति ॥ एवं देवे विसर्जिते सर्व-देवादिनिर्माल्यवस्तूनि अर्थात् गणेशगौरीपिण्डे तृणमातृपिञ्जुलिकाः मण्डपतोरणानि भित्तौ संलग्नाः समस्तमातृपिण्डिकाः मङ्गलकलशस्थ-पल्लवादिकम् तथैवाऽन्यान्यपि पुष्पादिपरिक्षेपणीयवस्तूनि एकस्मिन् वंशपात्रे एकत्रितानि कुर्यात् । ततो वरेण कन्यया वा सहिता माता मङ्गलगानं कुर्वतीभिः सौभाग्यवत्यादिभिः स्त्रीभिः समेता सर्ववस्तुधृत-वंशपात्रम् तथा जलसहितं मङ्गलकलशञ्चाग्रे कृत्वा ग्रामाद्वहि-र्नदीतडागादिजलाशयम् अथवा वनवाटिकादिकं प्रति गता तत्र स्थले आलेपनसिन्दूरादिद्वारा पृथिवीं संपूज्य तत्रैव वंशपात्रस्थ-वस्तूनि कलशजलञ्च यथाकुलाचारं प्रक्षिप्य पुनस्तथैव मङ्गल-

पढकर प्रार्थना करे । फिर द्रव्यादिद्वारा नापितादि भृत्योंको संतुष्ट करके स्त्रीके अञ्चलसे अपने उपवस्त्रकी ग्रंन्थि खोल सब कोई पूजास्थानसे उठे ॥ इसी प्रकार वर तथा कन्या इन दोनोंहीके घर सब देवताओंके विसर्जन हो जानेके पीछे संपूर्ण देवताओंकी निर्माल्य वस्तु, जैसे गणेश गौरीकी पिण्डी, तृणमातृका-ओंकी पुञ्जिका, मण्डपका बंधनवार, द्वारादि भित्तोंमें चिपकाई हुई सभी मातृकाओंकी पिण्डिका, मङ्गलकलशका पञ्चपल्लवादि तथा ऐसेही और भी जो पुष्पादि बाहर प्रक्षेप्य वस्तु हों उन सभोंको एकत्रितकर एक बांसकी दौरी आदिमें धरदेवे ॥ फिर अपने अपने घरोंमें विवाह भये वर तथा कन्याको साथ लिये वर अथवा कन्याकी माता सोहागिन आदि स्त्रियोंको साथ लिये मंगलगीत गाती बाजा बजाती बांसकी दौरी और जल सहित मंगलकलशको आगे किये गांवके बाहर नदी, तालाव आदि जलाशय या वनवाटिका आदिके किसी स्थानमें जाकर, वहां आलेपन सिन्दूरादि द्वारा पृथ्वीकी पूजा कर उसी स्थानमें दौरीकी सब वस्तु और कलशका जल छोडना आदि अपने

गानं कुर्वतीभिः सर्वाभिः सहैव यथादेशाचारं गृहमागच्छेत् । इति एवमेव वरगृहे कन्यागृहे च कृत्वा स्तम्भादिकमुत्पाट्य सर्वमण्डपमुद्वासयेत् ॥

इति श्रीचिकित्सकचूडामणि पं० ठाकुरप्रसादमणित्रिपाठिविरचितविवाहसोपाङ्गविधौ मण्डपोद्वासनप्रयोगः ।

## अथ वधूप्रवेशः ।

( गवना इति लोके प्रसिद्धः )

तत्रादौ वधूप्रवेशशब्दार्थः--नूतनपरिणीताया वध्वाः प्रथमतः क्रियमाणो भर्तृगृहे प्रवेशो वधूप्रवेश इति ॥

देशकुलाचारके अनुसार कर्मोंको कर पुनः वैसेही गाती बजाती सभोंके साथ अपने अपने घर यथाकुल देशाचार प्रवेश करें । इसी प्रकार दोनों घरोंमें होजानेके बाद खम्भा, मण्डप आदि सभी उखाड देवे । इति बालबोधिनीटीकायां मण्डपोद्वासनप्रयोगः ॥

वधूप्रवेशशब्दका अर्थ यह है कि–विहिता नवीन वधूका पहिले पहिल अपने पतिके गृहमें प्रवेश करना वधूप्रवेश कहाता है ॥

---

१ अथ मानवगृह्यकर्माद्युक्तवधूप्रवेशविधानसूत्राणि स्पष्टार्थसहितानि लिख्यन्ते–ततो यथार्थं कर्मसन्निपातो विज्ञेयः । ( मा० गृ० : पुरु० ११ खं १ सूत्रम् ) ॥ सूत्रार्थ--यस्य कर्मणो यत्र प्रयोजनं भवेत्, तस्य कर्मणः तत्रैवाऽनुष्ठानं विज्ञेयम्, अर्थात् सूत्रकाराः सूत्रग्रन्थेषु क्वचित् क्वचित् अन्यत्र कर्त्तव्यकर्मणोऽन्यत्रैवोल्लेखनं करिष्यन्ति । किन्तु कर्मकाण्डिभिः कर्मानुक्रमविधायकसूत्रप्रमाणेन आदौ सूत्रार्थमनुसन्धाय, यस्य कर्मणो यत्राऽवसरो भवेत, तस्य कर्मणो यथास्थानं तत्रैव संयोजनपूर्विकां पद्धतिं निर्माय, ततः तया पद्धत्या सर्वं संस्कारादिकर्म प्रयोक्तव्यम् । इति ॥

मानवगृह्यकर्म आदिमें कहेहुये वधूप्रवेशविधानके सूत्रोंको स्पष्टार्थसहित लिखते हैं, जिनके अनुसार वधूप्रवेशप्रयोग यहां लिखा है ॥ मानवगृह्यसूत्र प्रथम पुरुष ११ खण्डके १ सूत्रमें कहा है कि जिस कर्मका जहां प्रयोजन हो उसी अवसरमें उसका अनुष्ठान करना चाहिये । अर्थात् सूत्रकार सूत्रग्रन्थोंमें कहीं कहीं अन्यत्र करनेके कर्मोंको अन्यत्रभी कहदेते हैं परन्तु कर्मकाण्डियोंको चाहिये कि, सूत्रार्थ समझ जिस अवसरमें जो कर्म होना चाहिये उसी स्थानपर उसका प्रयोग करें, अतः पहिले पद्धति तैयारकर उसीके अनुसार सभीकर्म प्रयोग करना चाहिये ॥ १ ॥

मुहूर्तचिन्तामणौ तस्य मुहूर्तमाह—

समाद्रिपञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टिदिनान्तराले।

शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम् ॥ १ ॥

श्लोकार्थः--विवाहदिवसादारभ्याऽष्टिदिनान्तराले, कोऽर्थः षोडशदिन-मध्ये समाद्रिपञ्चाङ्कदिने समदिनानि द्वितीयचतुर्थषष्ठाऽष्टमदशमद्वादश-चतुर्दशषोडशानि तथा विषमेषु सप्तमपञ्चमनवमेषु दिनेषु वधूप्रवेशः शुभः। परस्तात् कोऽर्थः षोडशदिवसादनन्तरं वधूप्रवेशश्चेत्तदा विषमा-ब्दमासदिने विषमवर्षे विषममासे विषमदिने च कार्यः अक्षवर्षादिति पञ्चमवर्षादनन्तरं विषमवर्षादिनियमोऽपि नास्ति। किन्तु दोषरहितकाले वधूप्रवेशो विधेयः ॥ १ ॥

ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले।
वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ २ ॥

वधूप्रवेशका मुहूर्त्त भी मुहूर्तचिन्तामणिमें कहा है कि—विवाहदिनसे सोलह दिनोंके भीतर पहिला, तीसरा, ग्यारहवां, तेरहवां और पन्द्रहवां दिनोंको छोड बाकी जो दूसरा, चौथा, छठा, आठवां, दशवां, बारहवां, चौदहवां और सोलहवां अर्थात् इन समदिनोंमें और विषमदिनोंमें भी जो पांचवां सातवां और नौवां इन ४ दिनोंमें भी वधूप्रवेश होना शुभ होता है। विवाह दिनसे १६ दिन बीतजानेपर, यदि ५ वर्षके भीतरही वधूका प्रवेश होवे तो विषम-वर्ष, विषममास और विषमदिनोंमें ही करना। पांचवर्षभी बीतजानेसे विषम-वर्षादिका भी विचार नहीं कर केवल शुभनक्षत्रादि होनेसे दोषरहित कालमें वधूप्रवेश करना चाहिये ॥ १ ॥ और शुभ नक्षत्रादिका विचार मूलके श्लोका-र्थमें नक्षत्र, तिथि, वार वधूप्रवेशमें शुभकर ग्राह्य कहा और ४, ९, १४ ये

---

—तथैवात्र वधूप्रवेशपद्धत्यनुकूलानि सूत्राणि यथास्थाने विन्यस्याग्रे लिखितानि।

**ऊपर कहे प्रमाणानुसार यहां वधूप्रवेश पद्धतिके अनुकूल मानवगृह्यसूत्रादिके सूत्रोंको जिस अवसरमें कर्म करना उचित है क्रमके अनुसार (पुण्याहे युङ्क्ते) इत्यादि सूत्रोंको भाषार्थसहित गणपतिपूजनादि कर्मके उपरान्त टिप्पणीमें लिखा है ॥**

उत्तरात्रयरोहिणीति ध्रुवसंज्ञके हस्ताश्विनीपुष्याभिजितेति क्षिप्रसंज्ञके मृगशिर रेवतीचित्रानुराधेति मृदुसंज्ञके श्रवणधनिष्ठामूलघास्वातीति नक्षत्रेषु तथा रिक्ता ४, ९, १४ तिथिभौमरविवारव्यतिरिक्तेषु वधूप्रवेशः सन् ॥ बुधेऽपि नेष्टः इत्यपरैरुक्तः । इति ॥

अथ गृह्यसूत्रोक्तविधिना—

## वधूप्रवेशप्रयोगः ।

विवाहानन्तरं वधूप्रवेशो यदा मण्डपोद्वासनात्प्रागेव भवेत् तदा विवाहमण्डप एव पूर्वावाहितानां गणेशादिपूजनपूर्वकं वधूसहितो वरः कर्मारभेत् । यदि मण्डपोद्वासनान्ते भवेत् तदा त्वङ्गणादिगोमयोपलिप्तायां भूमौ पूजनादिकं कुर्य्यात् ॥ तद्यथा—वधूवरौ तैलाद्युद्वर्त्तनपूर्वकं कुलदेशाचारं यथा तथा कृतमङ्गलस्नानौ माङ्गलिकवस्त्राभरणैः स्वलंकृतौ पूजास्थानमागत्य पूर्वाभिमुखौ शुभासने स्थितौ यथाचारं लाक्षारसा-

रिक्ता तिथि, एवं मंगल, रवि और किसी किसी आचार्यके मतमें बुधवार भी वर्जित किया है, इत्यादि विचार लेना ॥ २ ॥

अब मानवगृह्यसूत्रादिमें कहे विधानोंसे वधूप्रवेशप्रयोग लिखते हैं । विवाह होनेके पीछे यदि वधूप्रवेश मंडपोद्वासनके पूर्वही होवे तो विवाहमण्डपहीमें पूर्वावाहित गणेशादिका पूजन करकेही वधूसहित वर कर्मोंका आरम्भ करे और मण्डपोद्वासन होजानेके पीछे यदि वधूप्रवेश कर्म होवे तो गोमयसे लिपीहुई अङ्गणादि किसी शुभस्थानकी भूमिमें वधूप्रवेशाङ्ग पूजनादि कर्मोंको करे ॥ सो इस प्रकार है कि-जैसा अपने कुल और देशका आचार हो उसीके अनुसार वधू तथा वर उबटन, तैल लगाय, मङ्गलस्नान कर सुन्दर वस्त्र आभूषणादिसे समलंकृत हो, पूजास्थानमें आकर पूर्वाभिमुख शुभासनपर दोनों ही

दिभिः पादरञ्जनादिकं कारयित्वा गणेशावाहनादिकं कर्म कुर्यात् । अथ गणेशादिपूजनम्-स्वस्य दक्षिणोपविष्टया ग्रन्थिबन्धनोपेतया पत्न्या युक्तोपविष्टः वरः आचम्य कुशानीतजलैः-ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ १ ॥ ॐ पुण्डरीकाक्षः पुनातु । इति पत्न्या सहितमात्मानं सर्वपूजा-सम्भारांश्च अभिषिच्य द्वावपि गणपतिस्मरणं कुर्याताम् । द्रव्याक्षतान् हस्तेनादाय-सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधि-पतये नमः ॥ ४ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबिके गौरि नारायणि नमोऽस्तु ते ॥ ५ ॥ श्रीमन्महागणाधिपतये नमः । गौर्यै नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । इत्यक्षतादीन् प्रक्षिप्य ततो वरः कुशादीन्यादाय-ॐ विष्णुर्विष्णुर्विष्णुरित्यादिमासादिकमुक्त्वा अमुकगोत्र अमुकशर्म्मा अनया वध्वा सह गार्हस्थ्यधर्माचरणेन धर्मार्थकाममोक्षसाधनपूर्वकश्री-परमेश्वरप्रीत्यर्थं अद्य पुण्याहे वधूप्रवेशाख्यकर्म तथा निर्विघ्नतापूर्वककर्म-

बैठ महावर आदि पांवोंमें लगवाय गणेशआवाहनादिकर्मोंको आरम्भ करे । अथ गणेश पूजनादि-गांठ बँधीहुई दहिने बैठी पत्नीके सहित वर आसनपर बैठा हुआ आचमन तीनवार कर कुशोंको जलमें बोर उनसे ' ॐ अपवित्रः०' आदि पढता हुआ स्त्री सहित अपने ऊपर और संपूर्ण पूजन सामग्रियोंपर जल छिडक देवे । फिर वर वधू दोनोंही हाथोंमें द्रव्याक्षतादि ले ' ॐ सुमुखश्चै० ' आदि कह गणेश स्मरण करके अक्षतादि छोड देवें । तत्पश्चात् वर कुशजलादि हाथमें ले ' ॐ विष्णु० ' इत्यादि कहता

समाप्तिकामः आदौ गणेशगौरीकलशग्रहाणां पूजनञ्चाहं करिष्ये ॥ इति संकल्प्य गन्धादिपञ्चोपचारैः--ॐ भूम्यै नमः । इति भूमिं संपूज्य कलशस्थापनं कुर्यात् । १ भूमिस्पर्शनम्--ॐ भूरसिभूमिरस्यदितिरसिव्विश्वधायाव्विश्वस्यभुवनस्यधर्त्री । पृथिवीं यच्छपृथिवीन्दृ७हपृथिवीम्माहि७सी ॥ ( य० अ० १३ मंत्र १८ ) ॥ २ गोमयनिर्मितां गौरीम् संस्पृश्य ॐ मानस्तोकेतनयेमानऽआयुषिमानोऽगोषुमानोऽअश्वेषुरीरिष ॥ । मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्त ॥ सदमित्त्वाहवामहे य० अ० १६ मंत्र १६ ) ॥ ३ कलशतले सप्तधान्यम् यवान् वा- ॐ धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्वाव्यानायत्वा । दीर्घामनुप्प्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणि ॥ प्प्रतिगृभ्णात्वाच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ( य० अ०१ मन्त्र २० ) ॥ ४ धान्योपरि कलशम्--धातुजं मृण्मयं वा ॐ आजिघ्रकलशम्मह्यात्वाव्विशन्त्विन्दव ॥ । पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माव्विशताद्रयि ॥ ( य० अ० ८ मन्त्र ४२ ) ॥ ५ कलशे जलम्--ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ( य० अ० ४

हुआ मासादिनामोंको उच्चारणकर 'करिष्ये' पर्यन्त संकल्प बोल छोडदेवे। फिर 'ॐ भूम्यै नमः' इस नाममन्त्रसे यथोपचार भूमिका पूजन करके कलशस्थापन इस प्रकार करे कि—फिर भूमिका स्पर्श किये हुये 'ॐ भूरसि०' मन्त्र पढे । और गोमयनिर्मिता गौरीका स्पर्शकर 'ॐमानस्तोके०' कहें। एवम् 'ॐ धान्यमसि०' से कलशके नीचे सप्त धान्य वा यवा धान्यपर कलश

मंत्र ३६ ) ॥ ६ कलशकण्ठे रक्तवस्त्रं सूत्रं वा वेष्टयेत्—ॐ युवासुवासाः परिवीत आगात् स उश्रेयान् भवतिजायमानः। तंधीरासः कवयउन्नयन्तिस्वाध्योमनसा देवयन्तः॥ ७ कलशे गन्धम्—चन्दनादिपरिलेपनञ्च। ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्॥ ८ कलशे सर्वौषधीः—ॐ याऽओषधीः पूर्व्वाजातादेवेभ्यस्त्रियुगम्पुरा। मनैनुबभ्रूणामह ᳬशतन्धामानिसप्तचं (य० १२ मन्त्र ७५ ) ॥ ९ कलशे सप्तमृदः—ॐ स्योनापृथिविनो भवानृक्षरानिवेशनी। यच्छानः शर्म्मसप्रथाः ( य० अ०३६ मन्त्र १३)॥१० कलशे दूर्वाङ्कुरान्—ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानोदूर्व्वेप्प्रतनुसहस्रेणशतेनच ( य० अ० १३ मं० २०) ॥११कलशे पूगीफलम्—ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः। बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वᳬहंसः (य०अ०१२ मं० ८९)॥ १२ कलशे पञ्चरत्नानि ॐ परिवाजपतिःकविरग्निर्हव्व्यान्यक्रमीत्। दधद्रत्नानिदाशुषे ॥ ( य० अ०११ मन्त्र २५ ) १३ कलशे हिरण्यम् ॐ हिरण्यगर्भः समवर्त्तताग्ग्रेभूतस्यजातः पतिरेकऽआसीत्। सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम य०अ०१३ मं० ४॥१४कलशे

ओं आजिघ्र०' से। कलशमें जल 'ओं वरुणस्यो०' से। कलशके कण्ठमें रक्तवस्त्र वा सूत्र 'ॐ युवासुवासा०' मन्त्रसे। कलशमें गन्ध और कलशपर चन्दनादि लेपन 'ॐ गन्धद्वारां०' से। कलशमें सर्वौषधी 'ॐ या औषधी०' से। सप्तमृत्तिका 'ॐ स्योना०' से। दूर्वा 'ॐ काण्डात्०' से। सुपारी 'ॐ

पञ्चपल्लवान् आम्रपल्लवं वा--ॐ अम्बेऽअम्बिकेऽम्बालिकेनमा नयति-कश्चन । स्वसस्त्यः श्वकः सुभद्रिकांकाम्पीलवासिनीम् ॥ १५ ॥ कलशे कुशान्--ॐ पवित्रेंस्त्थोव्वैष्णव्यौसवितुर्व्वः प्प्रसवऽउत्पुनाम्म्यच्छिद्द्रेण-पवित्त्रेणसूर्य्यस्यरश्मिभिः । तस्यतेपवित्रपतपेवित्रपूतस्ययत्कामः पुने-तच्छकेयम् ॥ १६ ॥ कलशोपरि तण्डुलपूर्णपात्रम्--ॐ पूर्णादर्व्विपरा-पतसुपूर्ण्णापुनरापत । व्वस्नेवव्विक्रीणावहाऽइषमूर्ज्जः शतक्रतो (य० अ० ३ मंत्र ४९ ) ॥ १७ पूर्णपात्रोपरि घृतप्रज्वलितदीपम् ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहासूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्योव्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा ज्योतिः सूर्य्यः सूर्य्योज्ज्योतिः स्वाहा (य०अ० ३ मं०९) ॥ ततः कलशसमीपे पुटकादावक्षतपुञ्जोपरि पूगीफलं निधाय तदुपरि गणेशमावाहयेत् । अक्षतान् गृहीत्वा- हे हेरम्ब त्वमेह्येहि अंबिकात्र्य-म्बिकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ पितुः पितः ॥ नागास्य नागहार त्वं गणराज चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपर-श्वधैः । आवाहयामि पूजार्थं रक्षार्थञ्च मम क्रतोः । इहागात्य गृहाण त्वं पूजां रक्ष च मे क्रतुम् ॥ गणपतये नमः गणपतिं आवाहयामि ॥ गोमयपिण्डे गौरीं आवाहयेत्--ॐ श्रीश्चतेलक्ष्मीश्चपत्न्याव्वहोरात्रे

या फलिनी०' से । पञ्चरत्न 'ॐ परिवाजपतिः' से । हिरण्य 'ॐहिरण्यगर्भः० से । पञ्चपल्लव या आम्रपल्लव 'ॐ अम्बेऽअम्बिके०' से । कुशा 'ओं पवित्रे-स्थो०' मन्त्रसे कलशमें छोडे । कलशपर तण्डुलपूर्णपात्र रखना 'ओंपूर्णाद०' से । पूर्णपात्रपर घृतसे प्रज्वलित दीप रखना ' ओं अग्निर्ज्ज्यो० ' से । फिर हाथमें अक्षतोंको लेकर कलशके समीप किसी दोना आदि पात्रमें अक्षत-पुञ्जपर धरीहुई, सुपारीपर गणेशका आवाहन 'ओं हे हेरम्ब० से । तथा

पाश्र्वेनक्षत्राणिरूपमश्श्विनौव्यात्तम्। इष्णन्निषाणामुम्मंऽइषाणसर्व्वं लोकम्मंऽइषाण ((य० अ० ३१ मं० २२)॥ गौर्यै नमः गौरीम् आवाहयामि ॥ कलशे वरुणम् आवाहयेत्॥ ॐ तत्त्वायामिब्रह्मणा-व्वन्दमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोव्वरुणेहबोध्युरुशꣳस मानऽआयुः प्रमोषीः॥ (य० अ० १८ मन्त्र ४९) ॐ अपांपतिं वरुणं कलशे आवाहयामि॥ ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञꣳसमिमन्दधातु। विश्वेदेवासऽइहमादयन्तामो३म्प्रातिष्ठ (य० अ० २ मं १३)॥ ॐ गणपत्यादि-देवेभ्यो नमः गणपत्यादिदेवान् प्रतिष्ठापयामि पूजयामि आसनार्थेऽक्ष-तान् समर्पयामि॥ इत्यक्षतान् प्रक्षिप्य सर्वोपचारैः संपूजयेत् ॐ गणेशगौरीवरुणदेवेभ्यो नमः। इति मन्त्रेण॥ ततः अनामिकाग्रेण कलशं स्पृशन् अभिमन्त्रणं कुर्यात्—ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु॥ कल-शस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ अङ्गैश्च सहिताः सर्वे कलशन्तु समाश्रिताः। गायत्री चैव सावित्री शान्तिः पुष्टिकरी तथा॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः॥ इत्यभिमन्त्र्य कलशं

गोमय पिण्डमें गौरीका 'ओं श्रीश्चते०' से। और कलशमें वरुणका 'ओं तत्वाया०' से अक्षत छोडता हुआ करदेवे। पुनः अक्षत ले 'ओं मनोजू०' से 'समर्पयामि' पर्यन्त कह गणपत्यादिपर अक्षतोंको छोड फिर सर्व उपचारोंसे गणेशादिकोंका पूजन 'ओं गणेशगौरी०' इत्यादि नाम मन्त्र से करके, फिर अपने दहिने हाथकी अनामिका अंगुलीके अग्रभागसे कलशको स्पर्श कियेहुये 'ओं गङ्ग च०' से 'कारकाः' पर्यन्त कह अभिमन्त्रण

प्रार्थयेत् । ॐ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं कर्म कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति संप्रार्थ्य गणपतये विशेषार्घं दद्यात् । ताम्रपात्रे गन्धाक्षतपुष्पफल-द्रव्यजलान्यादाय—ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्ता-नामभयंकर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुरा-ग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफला-र्घ्येण फलदोऽस्तु सदा मम । ॐ सिद्धिबुद्धिसहितमहागणपतये नमः । विशेषार्घ्यं समर्पयामि ॥ ततः प्रार्थयेत्-विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ १ ॥ भक्तार्त्तिनाशनपराय गणे-श्वराय सर्वेश्वराय शुभदाय सुरेश्वराय । विद्याधराय विकटाय च वाम-नाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णु-रूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥ विश्व-रूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । अविघ्नं

कर, फिर हाथ जोड कलशकी प्रार्थना करे 'ओंदेवदानव०' से 'सर्वदा' पर्यन्त कहकर फिर गणेशजीको विशेषार्घ इस प्रकार देवे कि, एक ताम्रपात्रमें गन्ध अक्षत पुष्प फल द्रव्य और जल रखकर इस पात्रको दोनों हाथोंसे लियेहुये 'ॐ रक्ष रक्ष०' से 'समर्पयामि' पर्यन्त कह गणेशके आगे अर्घ दे देवे । और

कुरु मे देव सर्वकार्येषु सर्वदा ॥ ५ ॥ इति संप्रार्थ्य हस्ते जलमादाय—ॐ अनया पूजया गणपत्यादिसर्वावाहिताः देवाः प्रीयन्तां न मम ॥ इति ॥ ततः पीठे पर्णपुटकादौ वा सूर्यादिग्रहान् अक्षतान् प्रक्षिपन् आवाहयेत् । ॐ सूर्याय नमः सूर्यमावाहयामि । ॐ चन्द्रमसे नमः चन्द्रमसमावाहयामि । ॐ भौमाय नमः भौममावाहयामि । ॐ बुधाय नमः बुधमावाहयामि । ॐ गुरवे नमः गुरुमावाहयामि । ॐ शुक्राय नमः शुक्रमावाहयामि । ॐ शनये नमः शनिमावाहयामि । ॐ राहवे नमः राहुमावाहयामि । ॐ केतवे नमः केतुमावाहयामि । ॐ अधिदेवेभ्यो नमः अधिदेवानावाहयामि ॐ प्रत्यधिदेवेभ्यो नमः प्रत्यधिदेवानावाहयामि । ॐ कुलदेवेभ्यो नमः कुलदेवानावाहयामि । ॐ ग्रामदेवेभ्यो नमः ग्रामदेवानावाहयामि । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः इन्द्रादिदशदिक्पालानावाहयामि । ॐ गणपत्यादिपञ्चलोकपालेभ्यो नमः गणपत्यादिपञ्चलोकपालानावाहयामि । ॐ आवाहितेभ्यो नमः स्थापयामि पूजयामि । इत्यावाह्य सर्वोपचारैः ॐ सूर्याद्यावाहितेभ्यो देवेभ्यो नमः ॥ इति मन्त्रेण संपूज्य हस्ते जलमादाय अनया पूजया सूर्याद्यावाहिताः देवाः प्रीयन्तां न मम ॥ ततः प्रार्थयेत्—ॐ ब्रह्मा सुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः

हाथ जोड 'ॐ विघ्नेश्वराय०' आदि ५ श्लोकों द्वारा गणेशकी प्रार्थना करके । फिर हाथमें जल ले 'ॐ अनया पू०' इत्यादि 'न मम' पर्यन्त कह जल छोड देवे ॥ तत्पश्चात् सूर्यादि बनेहुये ग्रहोंके पीठपर या दोना आदि किसी पात्रमें अक्षतोंको छोडताहुआ सूर्यादिकोंका आवाहन करे, 'ॐ सूर्याय नमः सूर्यम्०' इत्यादि नाम मन्त्रोंसे । फिर सर्वोंका पूजन, सर्व उपचारों द्वारा 'ॐ सूर्याद्यावाहिते०' इस नाममन्त्रसे करके, हाथमें जल ले 'ॐ अनया०' से 'न मम' पर्यन्त कह जल छोड देवे । फिर हाथ जोड 'ॐ ब्रह्मा मु०'

सर्वे ग्रहाः शान्तिकरा भवन्तु । सर्वेभ्यो देवेभ्यो नमः ॥ एवं पूजनान्ते वधूः वरस्य वामभागे स्थिता भवति । ततः पितृगृहात् पादहस्ताङ्गुलि-भूषणानि यानि प्राप्तवती तान्येव कापि सौभाग्यवती स्त्री गणेशाय समर्प्य प्रसादस्वरूपाणि वधूपादाङ्गुष्ठाद्यङ्गुलिषु परिधापयेत् । तत्र वरपठनीयो मन्त्रः- ॐ अलङ्करणमसि भूयोऽलङ्करणम्भूयात् । इति ॥ अथाञ्जलिपूरणकर्म—पुनः वधूपितृपक्षादेव आनीतम् हरिद्राफलद्रव्यसहितचणकद्विदलमिश्रित-आमतण्डुलकृसरान्नम् एकस्मिन् वंशनिर्मितनव्यपात्रे धृतं वध्वाः पुरतो निधाय तत्समीपे पत्रावलीआदि एकपात्रञ्च धृत्वा । वराञ्जल्युपरिसंलग्नवध्वाञ्जलिं तैरेव कृसरान्नादिभिः पुरोहितः कश्चिद्ब्राह्मणो वा पूरयेत् । ततो वक्ष्यमाणैकमन्त्रपाठान्ते वधूवरौ सहैव अञ्जलिभ्यां कृसरान्नादिकं विसृजेताम् । एवं पृथक् पृथक् वक्ष्यमाणमन्त्रैः

आदि कह प्रार्थना कर देवे ॥ इस प्रकार पूजन होजानेपर वरके वामभागमें वधूको बैठाना । फिर पाँव हाथकी अँगुलियोंके आभूषण अर्थात् अनवटँविछिया आदि वधूके पितागृहसे जो उपस्थित किये गये हैं उनको गणेशादिसे स्पर्शकराय और देवताओंका प्रसादस्वरूप मान कोई सौभाग्यवती स्त्री, वधूको अंगुष्ठ आदि यथास्थानोंमें पहिनावे और वर 'ॐ अलङ्करणमसि०' मन्त्रको पढे ॥ फिर चनाकी दाल और चावलोंकी मिली कच्ची खिचडी जो बाँसकी नवीन दौरीमें धरी जिसमें हलदीकी गांठे और फूल तथा द्रव्यआदि सहित, वधूके पितृपक्षसे वरवधूके अंजली भरनेके निमित्त उपस्थित की गई है उस खिचडीकी दौरीको, वर वधूके सामने रखकर इसीके समीप एक पत्रावली अथवा कोईभी पात्र रखना । इसके ऊपर वरके हाथोंकी बंधी अंजलीपर छुई हुई वधूकी अंजलीको, फलद्रव्य हरिद्रा सहित खिचडी, दौरीमेंसे लेकर पुरोहित अथवा कोईभी ब्राह्मण हो भर देवे ॥ और वधू अपनी अंजली खोल वरके अंजलीमें खिचड़ी आदिको छोडे, एवं वरभी 'ॐ प्रथमोंजलि०'

पञ्चवारं वधूप्रवेशेऽञ्जलयो भवन्ति । इति ॥ तत्र पञ्चमन्त्राः—ॐ प्रथमोऽञ्जलिरयं पूर्वं सीतारामाभिवन्दितः । सर्वेषु मम कार्येषु शुभदः सर्वदा भवेत् ॥ १ ॥ ॐ द्वितीयोऽञ्जलिरयं पूर्वं सत्याकृष्णाभिनन्दितः । सर्वेषु मम कार्येषु शुभदः सर्वदा भवेत् ॥ २ ॥ ॐ तृतीयोऽञ्जलिरयं पूर्वं गौरीशङ्करवन्दितः । सर्वेषु मम कार्येषु शुभदः सर्वदा भवेत् ॥ ३ ॥ ॐ चतुर्थोऽञ्जलिरयं पूर्वं सावित्रीब्रह्मपूजितः । सर्वेषु मम कार्येषु शुभदः सर्वदा भवेत् ॥ ४ ॥ ॐ पञ्चमोऽञ्जलिरयं पूर्वं कुन्तीपाण्डुप्रपूजितः । सर्वेषु मम कार्येषु शुभदः सर्वदा भवेत् ॥ ५ ॥ इति ॥ ततस्तदञ्जलिकृसरान्नादिकं वरपिता वरो वा स्वकुलदेवपूजनार्थं गृहीत्वा सुसञ्चितं कुर्यात् ॥ कुलदेशाचारतोऽत्र जनाः अञ्जलिशेषकृसरान्नात् एकैकाञ्जलिमात्रं कृसरान्नं ब्राह्मणनापितादिभ्योऽपि ददति ॥ इति ॥ पुनः वरस्य दक्षिणे वधूः स्थिता भवति । ततो वरः कुशजलसहितदक्षिणाद्रव्यमादाय ॐ अद्य कृतैतत् मम वधूप्रवेशकर्माङ्गभूतगणपत्यादिपूजनकर्मणः पूर्णतासिद्ध्यर्थं यथाशक्ति दक्षिणादिकम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । पुनः कुशजलन्यादाय ॐ अद्य

यह एक श्लोक पढ, नीचे पत्रावली या जो पात्र हो उसमें गिरादेवे । फिरभी ऐसाही और चार अंजली भरी जावे और आगेके चार श्लोकोंमें क्रमसे एक एक कह हर एकके पीछे वर अपनी अंजलीकी खिचडी आदि छोडदेवे । वधूप्रवेशमें यह पांचअंजली भरीजाती हैं ॥ इस पांच अंजलीकी खिचडीको वरका पिता, वा वर स्वयं ही अपने कुलदेवादिके पूजनार्थ लेकर सुरक्षितरूपसे रखलेवे ॥ और अंजली भरनेसे बचीहुई खिचडीमेंसे, इस समय कुल देशाचार के अनुसार ब्राह्मण नापित आदिको भी एक एक अंजलि खिचड़ी दे देते हैं ॥ फिर वरके दहिने वधूको बैठाकर वर अपने हाथमें कुशजल और दक्षिणा लेकर ' ॐ अद्य कृतैतत् मम वधूप्रवे०' इत्यादि संकल्पकर पुरोहित को देकर फिर हाथमें कुशजलादि ले 'ॐ अद्य अस्मिन्०' इत्यादि कह

अस्मिन् वधूप्रवेशकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणादिभ्यो यथाभागं विभज्य दातुम् अहमुत्सृजे। इत्यन्येभ्योऽपि दद्यात्। ततो हस्तेनाक्षतान् प्रक्षिपन् गणपत्यादिसर्वदेवान् विसृजेत्। ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम्। इष्टकामार्थसिद्ध्यर्थं पुनरागमनाय च ॥ १ ॥ भो गणपत्याद्यत्रावाहिता देवाः स्वस्थानं गच्छत। ममाभ्युदयं कुरुत ॥ इति ॥ एवं गणेशादिपूजनं विधाय अस्मिन्नवसरे अन्यान्यपि यानि स्वकुलदेशाचारानुसाराणि कर्माणि भवन्ति तान्यपि कृत्वा अग्रे गृह्यसूत्रोक्तप्रयोगानुसाराणि कर्माणि वरः कुर्यात्। ( तेषां प्रमाणार्थन्तु टिप्पण्यां सूत्राणि द्रष्टव्यानि) अथ पितृगृहाद्गमनसमये वधूः सौभाग्यवत्यादिभिः स्त्रीभिः सहिता वरम् अग्रे कृत्वा द्वारं गच्छति। तत्र गत्वा वरः शुभसंकल्प कर औरोंको भी भूयसी दक्षिणा बांट देवे ॥ फिर आवाहित गणपत्यादिकोंपर अक्षत छोडता हुआ 'ॐ यान्तुदेवगणा०' से 'कुरुत' पर्यन्त कह सबोंका विसर्जन कर देवे ॥ बस इस प्रकार गणेशादिका पूजन होजानेपर इस अवसरमें औरभी जो अपने कुल देशाचारके अनुसार कर्म होते हों, उन सभोंको भी पूरा करके, फिर गृह्यसूत्रोंमें कहे प्रयोगानुसार कमाको वर करे। (इन कर्मोंके प्रमाणार्थ सूत्राको टिप्पणीमें देखना) ॥ जिस समय माता तथा और सौभाग्यवती आदि अनेक स्त्रियोंके सहित वरके पीछे पीछे गांठ बंधीहुई वधू पिताके गृहसे चलकर बाहर द्वारपर पहुंचती है तो द्वारेपर, वर अपनी वधूको शुभ तिथि नक्षत्र ग्रहादियुक्त पुण्य दिनमें अपने गृहमें लेजानेके

१ पुण्याहे युङ्क्ते। ( मान० गृह्यसूत्रे १ पुरुषे १३ खण्डे १ सूत्रम्) सूत्रार्थः— निर्विघ्नतासिद्ध्यर्थं गणपत्यादिपूजनपूर्वकज्योतिःशास्त्राऽनुकूलतिथिनक्षत्रशुभग्रहादिशुभगुणयुक्ते इति पुण्याहे, वधूं स्वगृहन्नेतुकामो वरः रथादीन युङ्क्ते ॥ १ ॥ इति ॥

**प्रयोगके कर्मोंको देखनेसेही यहां लिखे सभी सूत्रोंका भाषार्थ स्पष्ट मालूम ही हो जायगा, बस इसीसे यहां इन सूत्रोंका भाषार्थ नहीं लिखा ॥**

तिथिनक्षत्रग्रहाद्युक्तपुण्याहे वधूं स्वगृहन्नेतुकामो रथादीन् युङ्क्ते ॥१॥ तद्यथाद्वारे वस्त्रादिभिः समलंकृते रथादियाने आदौ दक्षिणम् पुनः उत्तरम् युज्यमानम् अश्वम् वृषं वाऽभिमन्त्रयेत् । ( पुष्पाक्षतकुङ्कुमादि-प्रक्षेपणं कृत्वा सर्वत्राऽभिमन्त्रणं कुर्यात् ) ॐ युञ्जन्तिब्रध्नमरुष-ञ्चरन्तम्परितस्स्थुषः॑ रोचन्तेरोचनादिवि । १ । युञ्जन्त्यस्यकाम्म्याहरी॒विपक्षसारथेशोणाधृष्ष्णून्नृवाहसा ( य० अ० २३ मन्त्र ५,६ ) ॥२॥ इति द्वाभ्यां दक्षिणम् । पुनरपि द्वाभ्याम् उत्तरे युज्यमानम् अभिमन्त्र-येत्॥२॥ततो नूतनवस्त्रेण कुशैर्वा यानं संमार्ज्य॥३॥पुनःयानस्य दक्षिण-चक्रम् अभिमन्त्रयेत्-ॐ अङ्क्रून्यङ्कावभितोरथं येध्वान्तावाराअग्निमभिये-

निमित्त यहां रथादि सवारीका पूजनादि प्रयोग इस प्रकार करता है ॥ १ ॥ रथादि सवारीमें जो घोडे या बैल आदि लगे हों उनमेंसे पहिले दाहिनेवालाको 'ॐ युञ्जन्ति०' आदि दो मन्त्रोंको कह फिर इन्हीं दोनों मन्त्रोंको कहकर बायें तरफवालोंको अभिमंत्रित कर देवे । (सर्वत्र ही जिसका अभिमन्त्रण करना हो उसपर पुष्पाक्षत कुंकुमादि छोडकर करे ) ॥ २ ॥ फिर नवीन वस्त्र अथवा कुशोंकरके रथ या जो सवारी हो उसको झाड पोछ देवे ॥३॥ फिर दहिन पहिया का अभिमंत्रण 'ॐअंकून्यङ्का०'मन्त्रसे करके इसी मंत्रको कह बायें पहियाकाभी

---

१ युञ्जन्तिब्रध्नमिति द्वाभ्यां युज्यमानमनुमन्त्रयते, दक्षिणमथोत्तरम् । ( मा० गृ० १ पु० १३ खं० २ सूत्रम् ) ॥ सूत्रार्थः—रथादौ केनाऽपि युज्यमानम् अश्वं वृषं वा, युञ्जन्ति ब्रध्नमिति द्वाभ्यां मन्त्राभ्याम् आदौ दक्षिणम् पश्चादुत्त-रम्, अनुमन्त्रयते । इति ॥ २ ॥ अहतेन वाससा दर्भैर्वा रथं संमार्ष्टि । ( मा० गृ० सू० १ पु० १३ खं० ३ सूत्रम्) ॥ अस्यार्थः स्पष्टः ॥३॥ अंकून्यङ्कावभितो रथं येध्वान्ता वाता अग्निमभियेसञ्चरन्ति । दूरेहेतिः पतत्री वाजिनी वास्तेन नोऽग्नयः पप्रयः पालयन्तु ॥ इति चक्रे अभिमन्त्रयते । ( मा० गृ० सू० १ पु० १३ खं० ४ सूत्रम् ) ॥ सूत्रार्थः—अंकून्यङ्केति सूत्रोक्तमन्त्रेण रथादियानस्य दक्षिणवामचक्रे क्रमेणाऽभिमन्त्रयते । इति ॥ ४ ॥

सञ्चरन्ति । दूरे हेतिः पतत्रीवाजिनीवांस्तेनोऽग्नयः पप्रयः पालयन्तु ॥ इति मन्त्रेण । अनेनैव मन्त्रेण वामचक्रमपि ॥ ४ ॥ ततो यानस्याधिष्ठानस्थानाभिमन्त्रम्–ॐ व्वनस्पतेव्वीड्वङ्गोहिभूयाऽअस्मत्सखाप्प्रतरणःसुवीरः । गोभिःसन्नद्धोऽअसिव्वीडयस्वास्त्थातातेजयतुजेत्वानि॥ ( य० अ० २९ मं० ५२ ) इति मन्त्रेण ॥ ५ ॥ ततः सौभाग्यवत्यः स्त्रिय यथास्वकुलदेशाचारं कर्म कृत्वा याने वधूम् आरोहयन्ति । तत्र वरपठनीयो मन्त्रः–ॐ सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्य्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व । इति ॥ ६ ॥ ततो वरः स्वयमपि यानमारुह्य–ॐ अनुमायन्तु देवता अनुब्रह्म सुवीर्य्यम् । अनुक्षत्रन्तु यद्बलम् अनुमामैतु यद्यशः ॥ इति मन्त्रं पठित्वा यानं पूर्वाभिमुखं संचाल्य किञ्चित् प्रदक्षिणमावर्त्तयन्

अभिमंत्रण कर देवे ॥ ४ ॥ और यानमें बैठनेके स्थानको 'ॐ वनस्पते० मन्त्रसे अभिमन्त्रित कर देवे ॥ ५ ॥ फिर सौभाग्यवती स्त्रियां अपने देश-कुलाचारोंको करती हुई यानपर वधूको सवार करावे और वर 'ॐ सुकिंशुकं०, मन्त्र पढे और स्वयंभी उसी यानपर बैठे ॥ ६ ॥ फिर 'अनुमायन्तु०' मन्त्रको

१ वनस्पते वीड्वङ्ग इत्यधिष्ठानम् । ( मा० गृ० सू० १३ खं० ५ सूत्रम् ) ॥ सूत्रार्थः–वनस्पते वीड्वङ्गेति मन्त्रेण, रथादियानस्याऽधिष्ठानस्थानमभिमन्त्रयते इति । ५ सूत्रम् ॥ सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोहसूर्य्ये अमृतस्य लोकं स्यानंपत्येवहतुं कृणुष्व । इत्यारोहति ॥ (मानवगृह्यसूत्रे १ पुरुषस्य १३ खण्डे ६ सूत्रम् ) ॥ सूत्रार्थः–सुकिंशुकमिति सूत्रोक्तमन्त्रेण पत्नीम्, अध्वर्य्वादिद्वारा, रथे आरोहयति । इति ॥ ६ ॥ अनुमायन्तु देवता अनुब्रह्म सुवीर्य्यम् । अनुक्षत्रन्तु यद्बलम् अनुमामैतु यद्यशः । इति प्राक्भिप्राय प्रदक्षिणमावर्त्तयति ॥ ( मा० गृ० सू० १ पु० १३ खं० ७ सूत्रम् ) ॥ सूत्रार्थः–अनुमायन्त्विवति सूत्रोक्तमन्त्रेणादि पूर्वाऽभिमुखं किञ्चिद्रथादियानं सञ्चाल्य प्रदक्षिणक्रमेणावर्त्य स्वगमनमार्गाभिमुखमानयति । इति ॥ ७ ॥

स्वगृहगमननिश्चितमार्गमागत्य गमनं कुर्यात् ॥७॥ तत्र यानगमनसमये यानमवलोकयन् वक्ष्यमाणमन्त्रं पठेत्--ॐ प्रतिमायन्तु देवताः प्रतिब्रह्म-सुवीर्य्यम् । इति क्षत्रन्तु यद्बलम् प्रतिमामेतु यद्यशः । इति ॥८॥ तथा वरस हागताश्चापि तेनैव मार्गेण गमनं कुर्युः । इति ॥ अथाऽग्रे गच्छ-तस्तस्य मार्गे यद्यदमङ्गलाद्यवलोकनं भवेत तत्तच्छान्त्यर्थ-मप्यस्मिन् पुस्तके टिप्पण्यां लिखितेषु ९, १०, ११, १२, १३, १४, १५, १६, १७ सूत्रेषु पृथक्पृथक् मन्त्रपाठाद्यनेकप्रकार कर्माणि कथितानि तान्यपि तथैव वरेण कर्त्तव्यानि । इति ॥

पढ़ताहुआ यानको पूर्वाभिमुख कुछ चलाय दहिने तरफ फेरता हुआ अपने घर जानेके सीधे रास्तेपर यानको लाकर आगेको बढावे ॥ ७ ॥ और बढते समय यानके तरफ देखताहुआ 'ॐ प्रतिमाय०' इस मन्त्रको पढे ॥ ८ ॥ तथा वरके साथ जानेवाले बराती आदिभी वरके लौटचलनेके मार्गसेही लौट चलें ॥ आगे जातेहुये मार्गमें वरके संमुख यदि अमङ्गल आदि दिखाई पडें तो उनके शान्त्यर्थभी टिप्पणीमें लिखे ९ से १७ तकके सूत्रोंमें अनेक प्रकार के मन्त्रपाठादि पृथक् पृथक् कर्म कहे गये हैं । उनमेंसे जिनकी आवश्यकता हो उन कर्मोंको धर्मज्ञवर अवश्य ही करता हुआ चला जावे ॥ इति ॥

---

१ प्रतिमायन्तु देवताः प्रतिब्रह्म सुवीर्य्यम् । प्रतिक्षत्रन्तु यद्बलं प्रतिमामेस्तु यद्यशः । इति यथास्तंयन्तमनुमन्त्रयते ॥ ( मा० गृ० सू० १ पु० १३ खं० ८ सूत्रम् ) सूत्रार्थः--प्रतिमायन्त्विति सत्रोक्तमन्त्रेण स्वगृहगमननिश्चितमार्गगमनं कुर्वन् यानमवलोकयंश्च यानमनुमन्त्रयते । इति ॥ ८ ॥ अमङ्गल्यं चेदतिक्रामति अनुमायन्त्विति जपति । ( मा० गृ० सू० १ पु० १३ खं० ९ सूत्रम् ) ॥ सूत्रार्थः--यदि मार्गं गच्छन्नमङ्गलवस्तुसमीपेन गमनं भवेत् तदा अनुमायन्त्विति सप्तम-मंत्रोक्तं मन्त्रं जपति । इति ॥ ९ ॥ नमो रुद्राय ग्रामसद इति ग्रामे । इमारुद्रा-येति च ॥ ( मा० गृ० सू० १ पु० १३ खं १० सूत्रम् ) ॥ सूत्रार्थः--कश्चिद्ग्राम-मध्यमार्गेण गमनं भवेच्चेत् तदा नमोरुद्रायग्रामसद तथा इमारुद्राय इति च द्वौ मन्त्रौ जपति इति ॥ १० ॥ नमोरुद्रायैकवृक्षसद इत्येकवृक्षे । ये वृक्षेषु

एवं वरवधूसमेताः सर्वे स्वग्रामसमीपमागताः गोधूलिसमये अर्थात् पूर्वोक्त प्रकारसे मार्गमें चलतेहुये वधूसहित वर तथा और सभी वरके साथी,

—शष्पिञ्जरा इति च ( मा० गृ० सू० १ पु० १३ खं० ११ सूत्रम् ) सूत्रार्थः— मार्गे यद्येकाकिनं वृक्षं प्राप्नोति तदा नमोरुद्रायैकवृक्षसद तथा ये वृक्षेषु शष्पिञ्जरा इमौ द्वौ मन्त्रौ जपति। इति ॥ ११ ॥ नमोरुद्राय श्मशानसद इति श्मशाने। येभूतानामाधिपतय इति च ॥ ( मा० गृ० सू० १ पु० १३ खं० १२ सू० ) ॥ सूत्रार्थः—यदि मार्गे श्मशानभूमिं प्राप्नोति तदा नमोरुद्रायश्मशानसद तथा येभूतानामधिपतय इमौ द्वौ मन्त्रौ जपति। इति ॥ १२ ॥ नमो रुद्राय चतुष्पथसद इति चतुष्पथे। येपथांपथिरक्षय इति च ॥ ( मा० गृ० सू० १ पु० १३ खं० १३ सूत्रम् ) ॥ सूत्रार्थः—मार्गमध्ये चतुष्पथे प्राप्ते सति सूत्रसूचितौ द्वौ मन्त्रौ जपति। इति ॥१३॥ नमोरुद्राय तीर्थसद इति तीर्थे। येतीर्थानि प्रचरन्तीति च ॥ ( मा० गृ० सू० १ पु० १३ खं० १४ सूत्रम् ) सूत्रार्थः—पथि तीर्थे प्राप्ते सति सूत्रसूचितौ द्वौ मन्त्रौ जपति। इति ॥ १४ ॥ यत्रापस्तरितव्या आसीदति। समुद्राय वैणवेसिन्धूनां पतये नमः। नमो नदीनां सर्वासां पतये। विश्वा हा जुषतां विश्वकर्मणामिदं हविः स्वःस्वाहेत्यप्सूदकाञ्जलीभिनयति। अमृतं वा आस्ये जुहोम्यायुःप्राणेऽप्यमृतं ब्रह्मणा सह मृत्युन्तरात। प्रासहादिति रिष्टिरिति सुकूसिरिति सुक्षीयमाणः सर्वं भयंनुदस्वस्वाहेति त्रिः परिमृज्याचामति ॥ ( मा० गृ० १ पु० १३ खं० १५ सूत्रम )॥ सूत्रार्थः—यदि मार्गे तरितव्यनद्यादिजलाशयं प्राप्नोति तदाऽञ्जल्या जलं गृहीत्वा समुद्रायेत्यारभ्य स्वाहान्तं सूत्रोक्तमन्त्रं पठित्वा, तदञ्जलिजलं जलाशये क्षिपेत्। ततः अमृतंवेति सूत्रोक्तमन्त्रं पठित्वा मस्तकादारभ्य स्वकीयसर्वाङ्गानि जलेन त्रिवारं संमृज्य-त्रिराचमेत्। इति ॥१५॥ यदि नत्वा तरेत् सुत्रामणमिति जपेत्। ( मा० गृ० सू० १ पु० १३ खं० १६ सूत्रम् ) ॥ सूत्रार्थः—यदि मार्गे नौभिस्तरणं भवेत् तदा नौकायां स्थित्वा ओं सुत्रामाणंपृथिवीन्द्यामनेहस ँ सुशर्माणमदिति ँ सुप्रणीतिम्। दैवीन्नाव ँ स्वरित्रामनागसमस्रवन्तीमारुहे मास्वस्तये। इति मन्त्रं जपेत् ॥ १६ ॥ यदि रथाक्षः शम्याणी वा रिष्येतान्यद्वा रथाङ्ग तत्रैवाऽग्निमुपसमाधाय जयाप्रभृतिभिर्हुत्वा सुमङ्गलीरियंवधूरिमांसमेतपश्यत सौभाग्यमस्मैदत्त्वा याथास्तं विपरेतनेतिजपेन। वध्वासह बधूं समेत पश्यत। इति ( मा० गृ० सू० १ पु० १३ खं० १७ सूत्रम् ) ॥ सूत्रार्थः—यदि मार्गसञ्चलने कुत्रापि रथस्य अक्षः ( १ ) सम्पाणी ( २ ) तथा अन्याङ्गं वा त्रुटितं भवेत्, तदा तं

१ धुरीसैला। २ आरा आदि इति लोके प्रसिद्धः।

वनाच्चरणं कृत्वा ग्रामम् आगच्छन्तीभिः गोभिः सहैव ग्रामप्रवेशं कुर्युः केनापि कारणेन यदि दिन एव यद्वा अधिकरात्र्यां गतायां ग्रामप्रवेशस्य अवसरो भवेत् तदा ब्राह्मणाज्ञां गृहीत्वा ग्रामप्रवेशं कुर्युः। इति ॥१९॥ गृहाभ्यन्तरे वधूं सन्ध्यासमये विधिना प्रवेशयेत्। केनापि कारणेन यदि अन्यसमये प्रवेशस्यावसरो भवेत् तदा ब्राह्मणाज्ञां गृहीत्वैव प्रवेशो विधेयः ॥ १ ॥ इति ॥ एवं ग्रामं प्रविश्य वरगृहद्वारसमीपस्थले समा-
जब वरके ग्रामसमीपमें पहुंच जावें तो चाहिये कि, गोधूलिवेला अर्थात् जिस समय गौयें वन आदिमें चारा चरनेके पश्चात् लौटतीहुई ग्राममें प्रवेश करती हैं, उसीसमय गौवोंके साथही साथ वधू सहित वर तथा सभीको ग्राममें प्रवेश करना चाहिये। यदि किसी विशेष कारणोंसे गोधूलिका समय नहीं मिल सके और दिनहीमें अथवा रात्रिमेंही ग्रामप्रवेश करनेका अवसर हो तो किसी सद्ब्राह्मणसे आज्ञा लेकर ग्राममें प्रवेश करना इति ॥ १९ ॥ द्वारसे गृहके भीतर वधूको प्रवेश सन्ध्यासमयमें कराना। यदि किसी कारण सन्ध्या समयसे भिन्न समय होजावै तो ब्राह्मणकी आज्ञा लेकरही गृहके भीतर वधूको प्रवेश कराना चाहिये ॥ १ ॥ वरके गृहद्वारसे अति समीप-

---

शिल्पिद्वारा यथोचितं निर्माय ततः साग्निको विवाहवैदिकाग्निं सहैवानीतश्चेत् तदा तमेवाग्निं तत्रैवोपसमाधाय, प्रज्वलितं कृत्वा तत्र आघारवाज्यभागौ हुत्वा जयादिहोमं कुर्यात्। अनग्निकश्चेत् तदा होमं विनैव ओं सुमङ्गलीरियंवधूरिमांवधूंसमेत पश्यत सौभाग्यमस्यै दत्त्वा याथास्तंविपरेतन इति मंत्रं पत्नीसहित वरः पठेत्। ( मन्त्रे इमां समेतस्थाने वधूंसमेत इति पाठः प्रकर्त्तव्यः ) इति ॥ ॥ १७ ॥ गोभिः सहास्तमिते ग्रामं प्रविशन्ति, ब्राह्मणवचनाद्वा ॥ ( मा० गृ० सू० १ पु० १३ खं० १९ सूत्रम् ) सूत्रार्थः—सूर्येऽस्तमिते वनाच्चरणं कृत्वा गृहमागच्छन्तीभिः गोभिः सहैव वरवधूसमेताः सर्वे सहाऽऽगताः स्वग्रामप्रवेशं कुर्युः। यदि दिन एव यद्वा, अधिकरात्रौ गतायामपि ग्रामप्रवेशस्यावसरो भवेत्, तदा ब्राह्मणाज्ञां गृहीत्वा ग्रामप्रवेशं कुर्युः। इति ॥ १९ ॥ अपरस्मिन्नहः सन्धौ गृहान् प्रपादयीत ॥ ( मा० गृ० सू० १ पु० १४ खं० १ सूत्रम् ) ॥ सूत्रार्थः—सन्ध्यासमये विधिना वधूं गृहान् प्रपादयीत ॥ १ ॥

गत्य याने स्थिते सति यानस्थानादारभ्य वद्ध्वर्थनिर्दिष्टनिवासगृहाभ्यन्तरस्थानपर्यन्तं पूर्वपूर्वाग्रान् अन्तररहितान् भूमौ कुशानास्तृणुयात् ॥ ४ ॥ ततः पतिपुत्रशीलसम्पन्ना ब्राह्मण्यो यानसमीपमागतास्तत्र स्वकुलदेशाचारं कर्म कृत्वा 'ॐ प्रतिब्रह्मन्०' इति ब्राह्मणपठितमन्त्रान्ते यानाद्वधूम् अवतारयेयुः। वरोऽपि वध्ववतरणसमये ॐ व्युत्क्राम पन्थांजरितांजवन । शिवेनवैश्वानरइडयास्याग्रतः । आचार्यो येनयेनप्रयातितेनतेनसह॥ इति मन्त्रं पठित्वा स्वयमपि वध्वा सहैव आस्तृतकुशानामुपर्य्येव भूमौ अवतरेत् ॥ २ ॥ १८ ॥ एवं वधूसहितो वरः यानाद् स्थानमें जहां वधूसहित वरकी सवारी आकर ठहरी हो उसी स्थानसे आरम्भ कर अन्तर रहित अर्थात् एक दूसरेसे छुये हों ऐसे सघन कुशोंको पूर्वाग्र पूर्वाग्र करके गृहके भीतर जहां वधूके रहनेका स्थान पूर्वहीसे निश्चित कर लियाहो वहांतक बराबर पृथ्वीपर बिछा देवे ॥ ४ ॥ फिर पतिपुत्र और शील से संपन्ना ऐसी ब्राह्मणोंकी स्त्रियां सवारीके समीपमें आकर अपने देश और कुलानुसार कर्मोंको करनेके पश्चात् 'ॐ प्रतिब्रह्मन्०' मन्त्रको ब्राह्मण पढे और वधूको सवारीसे ब्राह्मणी लोग उतारें ॥ वधूके उतरते समय वरभी 'ॐ व्युत्क्राम०' मन्त्रको पढताहुआ वधूके साथही सवारीसे कुशोंके बिछी हुई भूमिपर उतरे ॥ २ ॥ १८ ॥ इस प्रकार वधूसहित सवारीसे उतरकर

१ गोष्ठात् सन्ततामुपलराजिं स्तृणाति ( मा० गृ० सू० पु० १४ खण्डे ४ सूत्रम् ) सूत्रार्थः-रथाद्गृहाभ्यन्तरपर्यन्तं पूर्वपूर्वाग्रान् निरन्तरान् कुशान् आस्तृणुयात् । इति ॥ ४ ॥ प्रतिब्रह्मन्निति प्रत्यवरोहति ॥ ( मा० गृ० सू० १ पु० १४ खं० २ सूत्रम् ) ॥ सूत्रार्थः-प्रतिब्रह्मन् इति मन्त्रं पठन् वधूं यानादवतारयेत् । इति ॥ २ ॥ ततोऽन्याः पतिपुत्रशीलसंपन्ना ब्राह्मण्यो यानाद्वधूमवतार्य गृहे वृषभचर्मण्युपवेशयेयुः ॥ इति गोभिलगृह्यसूत्रे । सूत्रार्थः स्पष्टः ॥ व्युत्क्रामपन्थां जरितां जवेन । शिवेन वैश्वानर इडयास्याग्रतः । आचार्यो येन येनयाति तेन तेन सह । इत्युभावेव व्युत्क्रामतः ॥ ( मा० गृ० सू० १ पु० १३ खण्डे १८ सूत्रम् ) ॥ सूत्रार्थः-व्युत्क्रामपन्थामिति वरपठितमन्त्रान्ते वधूवरौ व्युत्क्रामतः इति ॥ १८ ॥

वतीर्य आस्तृतकुशानामुपरि स्थितः ॐ गृहानहंसुमनसः प्रपद्येवीरंहि-
वीरवतः सुशेवा । इरांवहन्तीघृतमुक्षमाणास्तेष्वंहसुमनाः संवसाम ॥६॥
इति मन्त्रं पठित्वा ततो पश्चाद्ग्रन्थिबन्धनयुतां वधूं तथा चाग्रे जलपूरि-
तैककलशं लाजादिमाङ्गलिकद्रव्याणि च कृत्वा यदि वैवाहिकाग्निरानीत-
स्तदा तदग्निमप्यग्रे कृत्वा यानस्थानादास्तृतानां कुशानामुपर्य्युपर्य्येव
पादन्यासं कुर्वन् ॐ येष्वध्येतिप्रसवसन्येषुसौमनसंमहत् । तेनोप
ह्वयामहेतेनोजानन्त्वागतम् ॥ ५ ॥ इति मन्त्रं वरः स्वयम् अध्वर्यु-
द्वारा वा पठन् गृहद्वारं प्रविशेताम् ॥ ५ ॥ ६ ॥ द्वारप्रवेशसमये

पृथ्वीमें बिछेहुये कुशोंपर पतिके साथ गांठ बांधीहुई स्त्री पीछे खडी हो और उसके आगे खडाहुआ वर 'ओं गृहानहं०' इस मन्त्रको पढकर, अपने आगे जलसे भरा एक कलश और धानोंका लावा आदि मांगलिक वस्तुओंको किये हुये, यदि वैवाहिकाग्नि साथमें लाये हों तो उस अग्निको भी आगे किये हुये और सवारीके समीपसे पृथ्वीमें पहिलेहीसे बिछेहुये कुशोंहीपर पांव रखतेहुये वर वधू चलें और आगे चलताहुआ वर स्वयं अथवा अध्वर्युद्वारा 'ओं येष्व-

---

१ गृहानहं सुमनसः प्रपद्ये वीरं हि वीरवतः सुशेवा । इरां वहन्ती घृतमुक्ष माणास्तेष्वहं सुमनाः संवसाम । इत्याभ्याहिताग्निं सोदकं सौषधमावसथं प्रपद्ये-रोहिण्या मूलेन वा यद्वापुण्योक्तम् ॥ ( मानवगृह्यसूत्रे १ पुरुषस्य १४ खण्डे ६ सूत्रम्) ॥ सूत्रार्थः–गृहानहमिति सूत्रोक्तमन्त्रं पठित्वा जलपूरितैकपात्रं लाजा-दिमाङ्गलिकं च ( तथा वैवाहिकाऽग्निरानीश्चेत् तदा तमग्निमपि ) सहैव नीय-मानो वधूसहितो वरः गृहं प्रविशेत् । प्रवेशसमये रोहिणी वा मूलो यद्वा ज्योतिः शास्त्रानुकूलपुण्यमुहूर्तो भवेत् । इति ॥ ६ ॥ रथादध्योपासनात् । येष्वध्येति प्रसवसन्येषु सौमनसंमहत् । तेनोपह्वयामहे तेनो जानन्त्वागतम । इति तया-भ्युपैति ॥ ( मा० गृ० सू० १ पु० १४ खं० ५ सूत्रम् ) सूत्रार्थः–अध्यर्युर्वरो येष्व-ध्येति सूत्रोक्तमन्त्रं पठित्वा, वधूं पूर्वास्तृतान पूर्वाग्राणां कुशानामुपर्युपर्य्येवां यानान्निवासगृहाभ्यन्तरपर्य्यन्तमानयति । इति ॥ ५ ॥

तत्र गृहाभ्यन्तरतः दधिदूर्वाचन्दनादिमङ्गलवस्तूनां तयोः संमुखे निस्सारणं भवेत् । तथा गृहाभ्यन्तरेऽपि मङ्गलसूचकानि मन्त्रपाठगीतगानादिकानि च भवेयुः ॥ ३ ॥ गृहं प्रविशत्या वध्वा देहल्युपरि पादन्यासो न कर्त्तव्यः । इति ॥ ९ ॥ एवं वधूनिवासगृहाभ्यन्तरे प्राप्ते तत्र ( यदि वैवाहिकाग्निरानीतस्तदा तमग्निं प्रथमत एव निर्मितकुण्डे संस्थापयेत् । ततोऽग्नेः पश्चिमदिशि ) प्राग्ग्रीवे ऊर्ध्वलोमास्तृतलोहितानडुच्चर्मणि पूर्वाध्येति०' मन्त्रको पढताहुआ गृहद्वारमें प्रवेश करे ॥५॥६॥ जिस समय वधू और वर गृहद्वारमें प्रवेश करते हों उसी अवसरमें घरके भीतरसे दधि, दूर्वा और चन्दनादि मांगलिक वस्तुओंको लिये हुये लोगोंको वधूवरके संमुख द्वारसे बाहर निकलते हुये मिलें और घरके भीतरभी माङ्गलिक गीत तथा मंगलसूचक वेदादि मन्त्रोंका पाठ होते रहना परम मङ्गलकारी होता है ॥३॥ घरमें चलती हुई वधूको द्वारके देहलियोंपर पांव नहीं रखना चाहिये ॥ ९ ॥ इस प्रकार चलते हुये जब वधूके निवासगृहके भीतर पहुंच जावें तो वहां ( यदि वैवाहकाग्नि साथमें लाये हों तो उस अग्निको कुण्डमें, जो कि अग्निस्थापनके लिये पहिलेहीसे बनवाय रक्खे हों, उसीमें स्थापन करदेवें और उस अग्निसे पश्चिमदिशामें ( लालरङ्गके बैलका चमडा जिसके गलाका भाग पूर्वदिशाके तरफ, तथा लोमका भाग ऊपरके तरफ हो और उस लोमभागके

१ मङ्गलानि प्रादुर्भवन्ति ॥ ( मा० गृ० सू० १ पु० १४ खंडे ३ सूत्रम् ) सूत्रार्थ —वधूवरयोर्गृहद्वारप्रवेशावसरे गृहाभ्यन्तरतो दधिदूर्वाचन्दनादिमङ्गलवस्तूनां तयोः संमुखे निस्सारणम्. तथा गृहाभ्यन्तेऽपि मङ्गलसूत्रको मन्त्रपाठो गीतगानादिकञ्च भवेत् ॥ ३ ॥ न च देहलीमभितिष्ठति ॥ ( इत्यापस्तम्बीय २ पटले ५ खंडे वधूप्रवेशे ९ सूत्रम् ) सूत्रार्थः—गृहं प्रविशत्या वध्वा देहल्युपरि पादन्यासो न कर्त्तव्यः । इति ॥ ९ ॥ पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य, तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव ॥ ( मा० गृ० सू० १ पु० १४ खण्डे ७ सूत्रम् ) ॥ सूत्रार्थः—( वैवाहिकाऽग्निरप्यानीतश्चेत् तदा प्रथमत एव निर्मितकुण्डे तमग्निं संस्थाप्य तस्य पश्चिमदिशि ) प्राग्ग्रीवे ऊर्ध्वलोमास्तृतलोहिताऽनडुच्चर्मणि पूर्वाग्रान् दर्भानास्तीर्य तेषु वधूमुपवेशयति चर्माभावे दर्भेष्वेवोपवेशयति । इति ॥ ७ ॥

ग्रास्तृतेषु दर्भेषु वधूमुपवेशयेत्। चर्माभावे दर्भेष्वेव ॥ इति ॥ ७ ॥ अथ वरः संस्थितायां वध्वां अङ्के जीवत्पुत्रायाः पुत्रं चूडाकर्मरहितम् ॐ सोमेनादित्या बलिनः सोमेन पृथिवी मही। अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ इति मन्त्रं पठित्वा उपवेशयेत् । ( यस्यां स्त्रियां पुत्रस्यैव जन्म जातस्तथा जीवितोऽपि पुत्रो भवेत्, सा " जीवत्पुत्रा " इति संज्ञिका भवति इति )। केषाञ्चिन्मते तु जीवत्पुत्रायाः पुत्रस्थाने मृगचर्मादिधारिणं ब्रह्मचारिणं वध्वा अङ्के आरोपयेदिति लिखितमस्ति ॥८॥ ततो वध्वङ्कस्थितस्य कुमारस्याञ्जलिं वरः कमलबीजाद्यनेकफल-

ऊपरभी पूर्वाग्रपूर्वाग्र कुशोंको बिछाया हो, यदि बैलका चमड़ा नहीं हो तो केवल पूर्वाग्र बिछाये हुए कुशोंपरही वधूको वर बैठादेवे ॥७॥ फिर जिसका मुंडन नहीं हुआ हो, ऐसे जीवत्पुत्राके पुत्रको वर 'ॐ सोमेनादित्या०' इस इस मन्त्रको पढ, बैठी हुई वधूके गोदमें बैठा देवे। ( जिस स्त्रीके पुत्रही पुत्र पैदा हुयेहों और वे जीवितभी हों उस स्त्रीका नाम जीवत्पुत्रा कहाजाताहै)किसी के मतमें जीवत्पुत्राके पुत्रस्थानमें मृगचर्मादि धारणकिये ब्राह्मण ब्रह्मचारीको वधू के गोदमें बैठाना लिखाहै ॥८॥ फिर तिलमिलेहुये चावलोंके साथ कमलबीज तथा औरभी छोहारा, सुपारी आदि अनेक फलोंको एकत्रितकर, सब मिलीहुई

१ अथास्याः पुंस्वोजीवत्पुत्राया. पुत्रमङ्क उत्तरयोपवेश्य। अस्यार्थः-यस्यां स्त्रियां पुत्रस्यैव जन्म जातं, तथा स पुत्रो जीवितोऽपि भवेत् सा "जीवत्पुत्रा" तस्याः पुत्रम् वध्वा अङ्के उपवेश्य। इति आपस्तंबीये लिखितम् ॥ चूडाकर्मरहितं पुत्रम् उपवेश्य। इति गोभिलः। अथास्यै ब्रह्मचारिणमुपस्थ आवेशयति। सोमेनादित्या बलिनः सोमेनपृथिवी मही। अथो नक्षत्राणामेषामुपस्थे सोम अहितः। इति मा० गृ० सू० १ पु० १४ खंडे ८ सूत्रम् ॥ सूत्रार्थः सोमेनादित्येतिसूत्रोक्तमन्त्रं पठित्वा मृगचर्मादिधारिणं कञ्चिद् ब्रह्मचारिणं वध्वा अङ्के उपवेशयेत् ॥ ८ ॥ अथास्य तिलतण्डुलानां फलमिश्राणाञ्जलिं पूरयित्वोत्थाप्य। अथास्यै ध्रुवमरुन्धतीं जीवन्तीं सप्तऋषीनिति दर्शयेत्। मा० गृ० सू० १ पु० १४ खं० ९ सूत्रम् ॥ सूत्रार्थः—वध्वङ्कस्थितस्य कुमारस्याञ्जलिं कमलबीजाद्यनेकफलमिश्रिततिलतण्डुलैः पूरयित्वा वध्वा अङ्कात् कुमारमुत्थापयेत् ॥

मिश्रिततिलतण्डुलैः पूरयेत् । अथ कुमारं किञ्चिद्विश्राम्य ततः—ॐ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि । एनापत्यातन्वा७ संसृजस्वाथाजिव्रींविदथमावदाथः ॥१॥ ॐ सुमङ्गलीरियंवधूरिमांसमेतपश्यत सौभाग्यमस्यैदत्त्वायाथास्तं विपरेतन २ ॥ इमौ मन्त्रौ पठित्वा वरः वध्वङ्कात् कुमारमुत्थापयेत् ॥ एवंकृत्वा वरोऽपि तत्रैव नक्षत्रोदयकालपर्यन्तं वध्वासने स्थितो भवेत् । इति ॥ अथोदितेषु वध्वा सहितो वरः प्राचीम् उदीचीं वा दिशम् उपनिष्क्रम्य वध्वै ध्रुवम् अरुन्धतीम् जीवन्तीम् ( सप्तऋषीणां मध्यवर्त्तिनी तारा जीवन्तीति प्रसिद्धा ) सप्तऋषींश्च आकाशस्थितान् दर्शयेत् ॥ ९ ॥ आकाशस्थितान् ध्रुवादिकान् पश्य इति वरेण प्रैषानन्तरं सा पश्येत् । तस्यां समीक्ष्यमाणायां इन्हीं वस्तुओंसे, वधूके गोदमें बैठेहुये कुमारके अञ्जलीको वर भरदेवे । और कुछ थोडेही समय कुमारको विश्राम करनेके पश्चात् 'ॐ इह प्रियं०' और 'ॐ सुमङ्गली०' इन दोनों मन्त्रोंको "वर" पढकर वधूके गोदसे कुमारको उतार देवे । इतना कर्म हो जानेके पश्चात् वरभी वधूके आसनपर बैठे । एवं वर वधू दोनोंही नक्षत्रोंके उदय होने पर्यन्त मौन होकर बैठे रहें ॥ फिर आकाशमें ताराओंके उदय हो जानेपर, वधूको साथमें लिये हुये वर निवासगृहसे बाहर पूर्व या उत्तर दिशामें जाकर, वहां वधूको ध्रुव, अरुन्धती, जीवन्ती ( सप्तऋषियोंके बीचमें निकलनेवाली तारा जीवन्ती कहाती है ) और सप्तऋषियोंको आकाशमें निकलेहुये दिखावे ॥ ८ ॥ "आकाशस्थितान् ध्रुवादिकान् पश्य । आकाशमें स्थित ध्रुवादिको देखो" ऐसावरके कहनेपर

---

१ अथ अरुन्धतीम्, ध्रुवम्. जीवन्तीम्, सप्तऋषींश्च आकाशस्थितान् वध्वै वरः दर्शयेत् । ( सप्तऋषीणां मध्यवर्त्तिनी तारा " जीवन्ती " इति प्रसिद्धा ॥९॥ अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम् सर्वतः । ध्रुवासः पार्वता इमे ध्रुवा स्त्री पतिकुलेयम् । इति तस्यां समीक्ष्यमाणायां जयति ॥ ( मा० गृ० सू० १ पु० १४ खण्डे १० सूत्रम् ) सूत्रार्थः—तस्यां समीक्षमाणायां वरः अच्युतेति सूत्रोक्तं मत्रं पठेत् । इति ॥ १० ॥

वरः–ॐ अच्युताध्रुवा ध्रुवपत्नी ध्रुवं पश्येम सर्वतः । ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुलेयम् । इति मन्त्रं पठेत् ॥ १० ॥ इति । ततो वरेण वधूः ग्रन्थिनिर्मुक्ता भवेत् । इति । ( यदि कुण्डे वैवाहिकाग्निस्थापनमपि जातं तदातत्राग्नौ आहुत्यादिप्रकारन्तु गृह्यसूत्रादौ द्रष्टव्यम् ) इति ॥ ततो वधूवरौ ब्रह्मचर्यं चरतो यावत्संवत्सरम् । उत्तमम् । द्वादशदिनं यावन्मध्यमम् । यावत्रिदिनं साधारणम् । वा एकदिनमात्रन्त्वावश्यकमेव व्यतेयाताम् अर्थात् अक्षारलवणाशिनौ हविष्यान्नभोजिनौ पृथक् पृथक् अधः शायिनौ निवृत्तमैथुनौ भवेताम् ॥ इति ॥ १४ ॥

वधू आकाशमें वादिको देखे और वधूके देखते समयमें वर 'ॐ अच्युता ध्रुवा०' इस मन्त्रको पढे ॥ १० ॥ जब इतना कर्म समाप्त होजाय, तो वर के साथ जो वधूकी गांठ वंधीहै सो खोलदेना ( और कुण्डमें यदि वैवाहिकाग्निस्थापन हुआ हो तो उस अग्निमें आहुत्यादिका प्रकार गृह्यसूत्रादिग्रन्थोंमें देख तदनुसार कर्म करना ) और विवाहदिनसे सोलह दिनके भीतर ही यदि वधूप्रवेश भी हो जावे तोभी वर और वधू इन दोनोंहीको ब्रह्मचर्य रहना एक वर्षपर्यन्त उत्तम, बारह दिन पर्यन्त मध्यम और तीन दिन पर्यन्त साधारण होताहै । यदि इतना भी नहीं हो सके तो एकदिन पर्यन्त तो ब्रह्मचर्यके नियमसे रहना परमावश्यक ही होगा अर्थात् खारीनमकके विना हविष्यान्नका भोजनकरना, चारपाई आदि ऊंचेपर नहीं रहकर नीचे जमीनमें बिछे बिछोनेपर वरवधूको अलग अलग शयन करना, और निवृत्त मैथुन रहना इत्यादि दोनोंही

१ संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्रमेकरात्रं वा ॥ ( मा० गृ० सू० १ पुरुषस्य १४ खण्डे १४ सूत्रम् ) ॥ सूत्रार्थः–विवाहविधौ समाप्ते वधूवरौ ब्रह्मचर्यं चरतः यावत्संवत्सरम्–उत्तमम् । द्वादशदिनपर्यन्तं मध्यमम् । त्रिदिनं साधारणम् । वा एकदिनमात्रन्त्वावश्यकमेव व्यतेयाताम् । अर्थात् अक्षारलवणाशिनौ, हविष्यान्नभोजिनौ, निवृत्तमैथुनौ, पृथक् पृथक् अधःशायिनौ भवेताम् । इति ॥ १४ ॥ अथास्यै गृहान् विसृजेत् ॥ ( मा० गृ० सू० १ पु० १४ खण्डे १५ सूत्रम् ) सूत्रार्थः–एतस्मिन्नेवावसरे वध्वै गृहकार्याणि धनादिकस्यायव्ययसंरक्षणाद्यखिलगार्हस्थ्यानि समर्पयेत् । १५ ॥ इति वधूप्रवेशकर्मप्रबोधकानि स्पष्टार्थसहितानि मानवादिगृह्यसूत्राणि समाप्तानि ॥

वधूप्रवेशे सञ्जाते वध्वै गृहकार्याणि धनादिकस्य आयव्ययसंचयाद्यखिलगार्हस्थ्यानि समर्पयेत् । इति ॥ १५ ॥ यदि मण्डपोद्वासनं चतुर्थीकर्मान्ते न कृतश्चेत् तदा वधूप्रवेशकर्मान्ते पूर्वोक्तप्रयोगानुसारेणैव कर्त्तव्यम् ॥ इति श्रीचिकित्स० पं० ठाकुरप्रसादकृतविवाहसोपाङ्गविधौ वधूप्रवेशप्रयोगः ॥

अथ द्विरागमनम् । ( थौना इति लोके )

तत्रादौ द्विरागमनशब्दाऽर्थः मुहूर्तविचारश्च ॥ यथा—वधूप्रवेशानन्तरं परावृत्य पितृगृहं प्राप्ताया वध्वाः पुनर्भर्तृगृह आगमनम् इति द्विरागमनम् ॥ वधूप्रवेशमुहूर्तात् तस्य मुहूर्त्तं भिन्नमेव ॥ यथाह मुहूर्त्तचिन्तामणौ—चरेदथौजहायने घटालिमेषगे रवौ रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे ॥ नृयुग्ममीनकन्यकातुलावृषे विलग्नके द्विरागमं लघुध्रुवे चरेस्त्रपे मृदूडुभिः ॥ १ ॥

श्लोकार्थः—ओजहायने कोऽर्थः विषमवर्षे घटालिमेषगे रवौ कोऽर्थः कुम्भे वृश्चिके मेषे च स्थिते रवौ शुभग्रहस्य वासरे रवीज्यशुद्धियोगतः को चाहिये ॥ इति ॥ १४ ॥ एवं वधूका प्रवेश गृहमें हो जानेके पश्चात् गृहस्थीके सभी कार्य अर्थात् आमदनी, खर्च और सभीका संरक्षण आदि संपूर्ण कार्य वधूको समझाकर उसीको सौंपदेना चाहिये ॥१५॥ और चतुर्थी कर्मके अन्तमें यदि मण्डपोद्वासनकर्म नहीं किया गया हो तो वधूप्रवेशकर्म समाप्तहोनेपर पूर्वोक्त प्रयोगके अनुसार मण्डपोद्वासन करदेना चाहिये ॥ यह चिकित्सकचूडामणि० वधूप्रवेश पूराहुआ ॥

अब द्विरागमन—जिसे लोकमें "थवना" ऐसा कहते हैं। पहिले यहां "द्विरागमन" शब्दका अर्थ और इसके मुहूर्तका विचार लिखते हैं। पतिके गृहमें नवोढा वधूका प्रथमवार प्रवेश होजानेके पश्चात् पतिके गृहसे अपने पिताके गृहमें लौट आनेपर पुनः दूसरी बार पिताके गृहसे पतिगृहमें वधूका आगमन होना. यही "द्विरागमन" कहा जाता है ॥ द्विरागमनका मुहूर्त्त भी वधूप्रवेशके मुहूर्त्तसे भिन्न है। जैसा मुहूर्त्तचिन्तामणिमें कहा है कि—विषम

तथा मिथुनमीनकन्यातुलावृषाणाम् अन्यतमे लग्ने शुभयुते वा दृष्टे सति हस्ताऽश्विनीपुष्याभिजितेति लघुसंज्ञके उत्तरात्रयरोहिणीति ध्रुवसंज्ञके स्वातीऽपुनर्वसुश्रवणधनिष्ठाशतभिषेति चरसंज्ञके मृगशिरारेवतीचित्राऽनुराधेति मृदुसंज्ञके मूल च । एतेषु नक्षत्रेषु द्विरागमं चरेत् ॥ इति मुहूर्त विचारः ॥

अथ द्विरागमनप्रयोगः—तत्र गुरुशुक्रास्तादिदोषरहिते पूर्वोक्तशुभे मुहूर्ते वधूः गणेशस्मरणपूर्वकं वस्त्राभरणैः स्वलंकृता यथाकुलदेशाचारैः पितृगृहात् पतिगृहे द्वितीयवारम् आगमनं कुर्यात् ॥ इति द्विरागमनं भवति ॥ इति श्रीचिकित्सकचूडामणि पं० ठाकुरप्रासादमणित्रिपाठिविरचितविवाहसोपाङ्गविधौ द्विरागमनप्रयोगः ॥ समाप्तोऽयं ग्रन्थः ॥

वर्षोंमें, जब कुम्भ, वृश्चिक और मेष इन राशियोंके सूर्य हों, तथा सूर्य बृहस्पतिके शुद्ध योग रहनेपर शुभग्रहोंसे युक्तदिनोंमें और मिथुन, मीन, कन्या, तुला इन लग्नोंको छोडकर और दूसरी कोईभी लग्न जो शुभग्रहोंसे युक्त, वा दृष्ट हों ऐसी शुभलग्नोंमें, हस्त अश्विनी, पुष्य अभिजित्. तीनों उत्तरा, रोहिणी, स्वाती, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, मृगशिरा, रेवती, चित्रा. अनुराधा और मूल इन नक्षत्रोंमें वधूका द्विरागमन करना उत्तम होता है। इति मुहूर्त विचारः ॥

अत्र द्विरागमनप्रयोग—इस प्रकार है कि, पूर्वमें कहे मुहूर्त जिनमें, गुरु और शुक्रके अस्तादिदोष नहीं हों ऐसे किसी शुभ मुहूर्तको विचार इसमें वधू सुन्दर वस्त्राभूषणोंसे अलंकृत हो कुल देशाचारके अनुसार अपने पिताके गृहसे गणेशजीका स्मरण कर पतिके गृहमें दूसरी बार आगमन करे, यही द्विरागमन प्रयोग पूरा होता है ॥ इस चिकित्सक चूडामणि पं० ठाकुरप्रसादमणित्रिपाठीकी विरचित विवाहसोपाङ्गविधिमें दिरागमनप्रयोग पूराहुआ ॥

विवाहसोपाङ्गविधिः समाप्तः ॥

## अथाभिषेकः ।

गणाधिपो भानुशशी धरासुतो
बुधो गुरुर्भार्गवसूर्यनन्दनौ ॥
राहुश्च केतुप्रभृतिर्नवग्रहाः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ १ ॥

उपेन्द्र इन्द्रो वरुणो हुताशनो
धर्मो यमो वायुहरिश्चतुर्भुजः ॥
गन्धर्वयक्षोरगसिद्धचारणाः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ २ ॥

नलो दधीचिः सगरः पुरूरवाः
सकौन्तलेयो भरतो धनञ्जयः ॥
रामत्रयं वेणुबलिर्युधिष्ठिरः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ३ ॥

मनुर्मरीचिर्भृगुदक्षनारदाः
पराशरो व्यासवशिष्ठभार्गवाः ॥
वाल्मीकिकुम्भोद्भवगर्गगौतमाः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ४ ॥

रम्भा शची सत्यवती च देवकी
गौरी च लक्ष्मीश्च दितिश्च रुक्मिणी ॥
कूर्मो गजेन्द्रोऽपि चराचराधराः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ५ ॥

गंगा च क्षिप्रा यमुना सरस्वती
गोदावरी वेत्रवती च नर्मदा ॥
सा चन्द्रभागा वरुणा असी नदी
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ६ ॥

तुंगश्रवातद्रुगुरुचक्रपुष्करम्
गयाभिमुक्तो बदरीवटेश्वरः ॥
केदारपम्पासुरनैमिषारकम्
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ७ ॥

शंखश्च दूर्वासितपत्रचामरम्
मणिप्रदीपो वररत्नकाञ्चनम् ॥
सम्पूर्णकुम्भः सहितो हुताशनः
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ८ ॥

प्रयाणकाले यदि वा सुमङ्गले
प्रभातकाले च नृपाभिषेचने ॥
व्यासेन सम्पूर्णमनोरथाष्टकम्
कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ९ ॥

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥
ब्रह्मणा सहिताःसर्वेदिक्पालाः पान्तु ते सदा ॥ ३ ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ ४ ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥

ऋषयो मुनयो गावो देवमातर एव च ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥

सरितःसागराः शैलास्तीर्थानि जलदा नदाः ॥
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥

भगन्ते वरुणो राजा भगंसूर्यो बृहस्पतिः ॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो विदुः ॥ १० ॥

इत्यभिषेकः ॥

---

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,
'श्रीवेङ्कटेश्वर' स्टीम्-प्रेस,
खेतवाड़ी-बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
'लक्ष्मीवेङ्कटेश्वर' स्टीम्-प्रेस,
कल्याण-बम्बई.

